कामलाभासहं पापरक्षाकरं, पापरक्षाकर कामलाभासहम् ।
बाणचिद्र्धनं पूरकार्यधरं, पूरककार्यधरं बाणचिद्र्धनम ॥ ५ ॥ ( चन्द्रानन० )

अनेन पुष्पाञ्जलिः । ततः—

संसारसंसारसुतारणाय, सन्तानसन्तानकतारणाय,
देवाय देवायतितारणाय, नामोऽस्तु नामोस्तुतितारणाय ॥ १ ॥

इति बिम्बस्य निरुंछनकरणम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपः । पुनः पुष्पां०— (१९)

सदाततुं दयाकरं दयाकरं सदातनुम । विभावरं विसङ्गरं विसङ्गरं विभावरम ॥ १ ॥
निरञ्जनं निरञ्जनं कुपोषणं कुपोषणम । सुराजितं सुराजितं धराधरं धराधरम ॥ २ ॥
जनं विहाय रञ्जनं कुलं वितन्य सङ्कुलम् । भवं विजित्य सद्भवं जयं प्रतोष्य वै जयम् ॥ ३ ॥
घनं शिवं शिवं घनं चिरंतनं तनं चिरम । कलावृतं वृतं कला भुवः समं समं भुवः ॥ ४ ॥
नमामि तं जिनेश्वरं सदाविहारिशासनम । सुराधिनाथमानसे सदाविहारिशासनम ॥ ५ ॥ (प्रमाणिका०)

इति पुष्पाञ्जलिः ततो माल्यं गृहीत्वा—

प्रकटमानवमानवमंडलं, प्रगुणमानवमानवसङ्कुलम् । नमणिमानवमानवरं चिरं, जयति मानवमानवकौसुमम ॥१॥

इति बिम्बे माल्यारोपणम् । पुन शक्रस्तव । ऊर्ध्वाधो० वृत्तेन धूपः । पुन पुष्पां०— (२०)

बहुशोकहरं बहुशोकहर कलिकालमुद कलिकालमुदम् ।

हरिविक्रमण हरिविक्रमणं स कलाभिमतं सकलाभिमतम् ॥ १ ॥

कमलाक्षमल विनयायतन विनयायतनं कमलाक्षमलम् । परमातिशय वसुसंतलभं वसुसत्वलभं परमातिशयम् ॥ २ ॥

अतिपाटवपाटवल जयिनं हतदानवदानवसुं सगुणम् । उपचारजवारजनाश्रयण मतिमानवमानवरिष्ठरुचम् ॥ ३ ॥

सरमं कृतमुक्तिविलासरमं भयदं भवमुक्तमिलाभयदम् । परमं व्रजनेत्रमिदं परम भगवन्तमये प्रभुताभगवम् ॥ ४ ॥

भवभीतनरप्रमदाशरण शरण कुशलस्य मुनीशरणम् ।

शरण प्रणमामि जिनं सदये सदये हृदि दीप्तमहागमकम् ॥ ५ ॥ ( जगति० )

इति पुष्पाञ्जलिः । तत —

आशातना या किल देवदेव, मया त्वदर्चारचनेऽनुपक्ता ।

क्षमस्व तं नाय कुरु प्रसाद, प्रायो नरा स्यु प्रचुरप्रमादाः ॥ १ ॥

इति जिनबिम्बस्यांजलिना बद्धेनापराधक्षामणम् । पुनः शक्र० ऊर्ध्वाधो० धूप ॥ पुन पुष्पां०— (२१)

करकलितपालनीयः कमनीयगुणैकनिधिमहाकरण करकलितपालनीयः स जयति जिनपतिरकर्मकृतकरण ॥१॥ ॥ २१ ॥

विनयनयगुणनिधानं सदारतावर्जनं विसमवायम् । वन्दे जिनेश्वरमहं सदारतावर्जनं विसमवायम् ॥२॥
जलतापवारणमहं नमामि सुखदं विशालवासचयम् । जलतापवारणमहं नमामि सुखदं विशालवासचयम् ॥३॥
शृंगारसमर्यादं यादःपतिवत् सदाप्यगाधं च । शृंगारसमर्यादं याद-पतिवन्दितं प्रतिप्रणामि ॥४॥
भीमभवार्णवपोतं वन्दे परमेश्वरं सितश्लोकम् । उज्झितकलत्रपोतं वन्दे परमेश्वरं सितश्लोकम् ॥५॥
( गीतयः )

इति पुष्पाञ्जलिः । ततो दीपं गृहीत्वा—

नीरस्य तर्षहरणं ज्वलनस्य तापं तार्क्ष्यस्य गारुडमनंगतनोर्विभूषणम् ।
कुर्मो जिनेश्वर जगत्त्रयदीपरूप दीपोपदां तव पुरो व्यवहारहेतोः ॥ १ ॥

इति दीपपूजा । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपः ॥ पुनः पुष्पां०— (२२)

वनवासं वनवासं गुणहारिणहारिवपुषं वपुषम् ।
विजयानं विजयानं प्रभुं प्रभुं नमत नमत बलिनं बलिनम् ॥ १ ॥

सोमकलं सोमकलं पङ्के हितं पङ्के हितं पुण्ये पुण्ये ।
वह्निमुख वह्निमुखमहितं महितं परं परं धीरं धीरम् ॥ २ ॥

स्मृतिदायी स्मृतिदायी जिनो जिनोपास्तिकायः कायः ।
नखरायुध न खरायुध वन्द्यो वन्द्यो यक्षचक्रक्रान्तः कान्तः ॥ ३ ॥
शङ्काहृत् शङ्काहृत् कुलाकुलाहार हार करणः करण ।
विश्वगुरुर्विश्वगुरुः कविराट् कविराट् महामहाकामः कामः ॥ ४ ॥
कल्याण कल्याण प्रथयन् प्रथयन् हिते हिते मख्य प्रख्य' ।
परमेष्ठी परमेष्ठी लाभो लाभो वितर वितर सत्त्व सत्तम् ॥ ५ ॥ ( खबाजातिः )

इति पुष्पाञ्जलिः । ततो दर्पण गृहीत्वा—

धीराधीरावगाहः कलिलकलिलताछेदकारीदकारी, प्राणि प्राणिवियोग सरुचिसरुचिता भासमानः समान ।
कल्पाकल्पात्मदर्शः परमपरमताछेददक्षोददक्षो, देवादेवात्महृद्यः स जयति जयतिर्यक्प्रकृष्ट प्रकृष्ट• ॥ १ ॥

इति बिम्बे दर्पणढौकनम् । पुनः शक्रस्तवः । ऊर्ध्वाधो० धूप । पुन पुष्पां०— (२१)

अनारतमनारत सगुणसङ्कुलं सङ्कुल, विशालकविशालक स्मरगजेसमंजे समम ।
सुधाकर सुधाकर निजगिराजितं राजितं, जिनेश्वरं जिनेश्वरं प्रणिपतामि तं तापितम् ॥ १ ॥
जरामरणबाधनं निलयसाधुतासाधनं, नमामि परमेश्वर स्तुतिनिपक्तवागीश्वरम् ।
जरामरणबाधनं विलयसाधुतासाधनं, कुरङ्गनयनालटत् कटुकटाक्षतीव्रतप ॥ २ ॥

अनन्यशुभदेशनावशगतोरुदेवासुरं, पुराणपुरुषार्दनमचलदक्षभंगिश्रियम् ।
अशेषमुनिमंडलीप्रणतिरंजिताखंडलं, पुराणपुरुषार्दनमचलदक्षभंगिश्रियम् ॥ ३ ॥

स्मरामि तव शासनं सुकृतसत्त्वसंरक्षणं, महाकुमतवारणं सुकृतसत्त्वसंरक्षणम् ।
परिस्फुरदुपासकं मृदुतया महाचेतनं, वीतीर्णजननिर्वृतिं मृदुतया महाचेतनम् ॥ ४ ॥

पयोधरविहारण जिनवरं श्रियां कारणं, पयोधरविहारणं सरलदेहिनां तारणम् ।
अनगकपरासनं नमत मंक्षु तीर्थेश्वरं, अनंगकपरासनं विधृतयोगनित्यस्मृतम् ॥ ५ ॥ ( पृथ्वी० )

अनेन पुष्पांजलिः । ततः—

त्वय्यज्ञाते स्तुतिपदमहो किं त्वयि ज्ञातरूपे, स्तुत्युत्कण्ठा न तदुभयथा त्वत्स्तुतिर्नाथ योग्या ।
तस्मात्सिद्ध्युद्व्रजनविधिना किंचिदाख्यातिभाजो, लोका भक्तिप्रगुणहृदया नापराधास्पदं स्युः ॥ १ ॥

इति वृत्तं पठित्वा अधिकृतजिनस्तोत्रं पठेत् । पुनः शक्रस्तवः । ऊर्ध्वाधो० वृत्तेन धूपश्च । पुनः पुष्पांजलिं गृहीत्वा— (२४)

कुलालतां च पर्याप्तं निर्माणे शुभकर्मणाम् । कुलालतां च पर्याप्तं वन्दे तीर्थपतिं सदा ॥ १ ॥
जयताज्जगतामीशः कल्पवत्तापमानदः । निरस्तममतामायः कल्पवत्तापमानदः ॥ २ ॥

महामोहमहाशैल पविज्ञानपरायण । परायणपविज्ञान जय पारगतेश्वर ॥ ३ ॥

समाहितपरिवार परिवारसमाहित । नमोऽस्तु ते भवच्छेद्यो भवच्छेद्यो नमोऽस्तु ते ॥ ४ ॥

वराभिरूप वराभिरूप कृपाकर कृपाकर । निराधार निराधार जयानत जयानत ॥ ५ ॥ (श्लोका.)

अनेन पुष्पाजलि । तत —

न स्वर्गाप्सरसां स्पृहा समुदयो नो नारकोच्छेदने, नो ससारपरिक्षितौ न च पुनर्निर्वाणनित्यस्थितौ ।
त्वत्पादद्वितय नमामि भगवन् किन्त्वेककं प्रार्थये, त्वद्भक्तिर्मम मानसे भवभवे भूयाद्विभो निश्चला ॥ १ ॥

इत्यञ्जलिं कृत्वा बिम्बाग्रे विज्ञप्तिकां कुर्यात् । पुनः शक्रस्तव । ऊर्ध्वाधो० वृत्तेन धूपश्च । पुन पुष्पां० (२५)

अधिकविरसः शृङ्गाराङ्ग समाप्तपरिग्रहो, जयति जगता श्रेयस्कारी तवागमविग्रह ।
अधिकविरस शृङ्गाराङ्गः समाप्तपरिग्रहो, न खलु कुमतव्यूहे यत्र प्रवर्तितविग्रहः ॥ १ ॥

विषयविषम हन्तु मंक्षु प्रगाढभवभ्रम, बहुलवलिनो देवाधीशा नितान्तमुपासते ।
तव शुपवनं यस्मिन् कुजान् महत्तमयोगिनो, बहुलनलिनो देवाधीशा नितान्तमुपासते ॥ २ ॥

समवसरण साधुप्याग्रैष्टपैरहिभिर्वरं, जयति मधुभित्सल्क्षानेकाचिनश्वरनाटकम ।
तव जिनपते काशापूर्ति प्रयच्छतु संकुल, समवसरण साधुप्याग्रैष्टपैरहिभिर्वरम् ॥ ३ ॥

तव चिदुदयो विश्वस्वामिन्नियर्ति विशंकितो, जलधरपदं स्वर्गव्यूहं भुजंगगृहं परम् ।
जलधरपदं स्वर्गव्यूहं भुजङ्गगृहं परं, त्यजति भवता कारुण्याढ्याक्षिपक्ष्मकटाक्षितः ॥ ४ ॥

विशदविशदप्राज्यप्राज्यप्रवारणवारण, हरिणहरिणश्रीदश्रीदप्रबोधनबोधन ।
कमलकमलव्यापव्यापदरीतिदरीतिदा, गहनगहनश्रेणीश्रेणी विभाति विभाति च ॥ ५ ॥ (हरिणी०)

अनेन पुष्पाञ्जलिः । ततः—

जय जय देव देवाधिनाथो लसत्सेवया प्रीणितस्वान्तकान्तप्रभ—
प्रतीघ बहुलदावनिर्वापणे पावनांभोदवृष्टे विनष्टाखिलाद्यव्रज ।
मरणभयहराधिकध्यानविस्फूर्जितज्ञानदृष्टिप्रकृष्टेक्षणाशंसन,
त्रिभुवनपरिवेषनिःशेषविद्वज्जनश्लाघ्यकीर्तिस्थितिख्यातिनाश प्रभो ॥ १ ॥

इति वृत्तेन बिम्बाग्रतोऽञ्जलिं बद्ध्वा क्षणं ध्यानम् । पुनः शक्रस्तवः । पुनः धूपं गृहीत्वा—

ऊर्ध्वाधोभूमिवासित्रिदशदनुसुतक्ष्मास्पृशां घ्राणहर्षात्, प्रौढिप्राप्तप्रकर्षक्षितिरुहरसजक्षीणपापावगाहः ।
धूपोऽकूपारकल्पप्रभवमृतिजराकष्टविस्पष्टदुष्ट—स्फूर्जत्संसारपाराधिगममतिधियां विश्वभर्तुः करोतु ॥ १ ॥

अनेन वृत्तेन धूपोत्क्षेपः । इति पञ्चविंशतिकुसुमाञ्जलयः प्रक्षिप्यन्ते । एतान्येव कुसुमाञ्जलिकाव्यान्तर्गत-

विधिकाव्यपञ्चविंशतिरहितानि कुसुमाञ्जलिकाव्यानि पञ्चविंशत्युत्तरशतसंख्यानि । एतत्स्तुतिकुसुमाञ्जलि-महाकाव्य विद्वद्भिर्भणनीय परिशीलनीयं व्याख्येयं पठनीयं पाठनीय च । तत आह्वानं० आवाहन० कीर्ति श्रियो० ॥ [ आचारदिनकर पृ० १८५ त पृ० १९५ पर्यंत ]

॥ इति पञ्चविंशतिकुसुमाञ्जलिविधानात्मको विधि' ॥

पच्चीस कुसुमाञ्जलि विधान पूजन सामग्री— १ चदन अर्चन, २ कुङ्कुम अर्चन, ३ यक्षकर्दम विलेपन, ४ कर्पूर आरोपण, ५ वासक्षेप, ६ कस्तूरी लेप, ७ कालागरु लेप, ८ पुष्पालङ्कार अवतरण, ९ स्नपन पीठ प्रक्षालन, १० बिम्बमार्जन, ११ पुष्प आरोपण, १२ फल ढौकन, १३ अगरु क्षेप, १४ संयुक्त धूप उत्क्षेपण, १५ जल पूजा, १६ अक्षत आरोपण, १७ पञ्चांगरक्षा, १८ निलुछनकरण, १९ मालारोपण, २० अपराध क्षामण, २१ दीपदान, २२ दर्पण ढौकन, २३ अधिकृत जिन स्तोत्र ( शान्तिनाथ भगवाननी स्तुति ) २४ विज्ञप्तिका, २५ क्षणध्यानम् ।

---

## अथ चतुर्णिकायदैवतमूर्तिप्रतिष्ठाविधिः ॥

स चायं भवनपतीनां दशविधानां विंशतीन्द्राणां व्यन्तराणा षोडशविधानां द्वात्रिंशदिन्द्राणां वैमानिकानां द्वादशकल्प-नवग्रैवेयक-पञ्चाणुत्तरभवानां दशेन्द्राणां तत्तद्वर्णकाष्ठधातुरत्नघटितमूर्तीनामयं प्रतिष्ठाविधिः ।

चैत्ये वा गृहे वा पूर्वं बृहत्स्नात्रविधिना जिनस्नात्रम् । ततो मिलितेन पञ्चामृतेन दैवतप्रतिमास्नात्रम् । ततः पञ्चविंशतिवस्तुवासैः वासक्षेपः धूपदानं यक्षकर्दमलेपनं पुष्पादिपूजा । प्रतिष्ठामन्त्रो यथा—
ॐ ह्रीं श्रीं क्लीं क्लूं कुरु कुरु, तुरु तुरु, कुलु कुलु, चुरु चुरु, चुलु चुलु, चिरि चिरि, चिलि चिलि, किरि किरि, किलि किलि, हर हर, सर सर, हूं सर्वदेवेभ्यो नमः । अमुकनिकायमध्यगत अमुकजातीय अमुकपद अमुकव्यापार अमुकदेव इह मूर्तिस्थापनायां अवतर अवतर, तिष्ठ तिष्ठ चिरं पूजकदत्तां पूजां गृहाण गृहाण स्वाहा । इति प्रतिष्ठामन्त्रः । निकायस्थाने भवनपति–व्यन्तर–वैमानिककथनं जातिस्थाने भवनपतिष्वसुरादिकथनं व्यन्तरेषु पिशाचादिकथनं वैमानिकेषु सौधर्मभवादिकथनं पदस्थाने इन्द्र–सामानिक–पार्षद्य–त्रायस्त्रिंश–अङ्गरक्ष–लोकपालानिकप्रकीर्णकाभियोगिक–कैल्बिषिक–लौकान्तिक–जृम्भकादिकथनं कर्मकथने तद्गुणकृतकीर्त्तनवर्णआयुधपरिवारकथनम । इति । मन्त्रमध्ये अमुकस्थाने विवक्षा । एवं देवीनामपि । अत्र गणिपिटक–यक्ष–शासनयक्षिणी–ब्रह्मशान्तिप्रतिष्ठा व्यन्तरेष्वन्तर्भवति कन्दर्पादिप्रतिष्ठा वैमानिकेषु लोकपालानां प्रतिष्ठा भवनपतिषु निर्ऋतेः प्रतिष्ठा व्यन्तरेषु ज्योतिष्काणां प्रतिष्ठा ग्रहप्रतिष्ठायामन्तर्भूता । इति प्रतिष्ठाधिकारे चतुर्णिकायदेवप्रतिष्ठा संपूर्णा ।



## પરિશિષ્ટમ્ [B]

# પ્રતિષ્ઠાવિધિક્રમ

જલમંત્ર લિખ્યતે-ૐ હ્રીઁ અમૃતે અમૃતોદ્ભવે અમૃતવર્ષણી અમૃત શ્રાવય શ્રાવય સ્વાહા ॥ ઇતિ ॥

(દાતણ કરવો તેનો) જલ મંત્રીએ વાર ૭ ॥ ૧ ॥

અથ દાતણમંત્ર ૐ હ્રૂઁ યક્ષસેનાધિપતયે નમ ॥ એણે મંત્રે ૭ વાર દાતણ મંત્રી કરીએ ॥ ૨ ॥

અથ મુખધાપનમંત્ર ૐ હ્રીઁ શ્રીં ક્લીં કામદેવાધિપતે ! મમાભીપ્સિત પૂરય ૨ સ્વાહા ॥ એણે મંત્રે ૭ વાર મંત્રી ગણી મુખધાપન કરીએ ॥ ૩ ॥

અથ સ્નાનમંત્ર ૐ આ ક્રોઁ હ્રીઁ અમલે વિમલોદ્ભવે સર્વતીર્થજલોપમે પા પા વા વા અશુચિ શુચિર્ભવામિ સ્વાહા ॥ ઇણે મંત્રે ૭ વાર ભણી સ્નાન કરવુ ॥ ૪ ॥

ૐ હ્રીઁ આઁ ક્રોઁ નમ ॥ ઇતિ વસ્ત્રમંત્ર ॥ ઇણે મંત્રે ૭ વાર ભણી વસ્ત્ર પહેરીએ ॥ ૫ ॥

ૐ આઁ હ્રીઁ ક્રોઁ અર્હંતે નમ । ઇતિ તિલકમંત્ર ॥ ઇણે મંત્રે ૭ વાર મંત્રી તિલક કીજે ॥ ૬ ॥

ૐ હ્રીઁ અવતર ૨ સોમે ૨ કુરુ ૨ વલ્ગુ ૨ નિવલ્ગુ ૨ સુમણે સોમણસે મહુમહુરે ૐ કવલીક ક્ષ સ્વાહા ॥

ઇતિ ગેવા (ગ્રીવા) સૂત્રમિંઢલાદિબંધનમંત્રઃ ॥ ઇણે મંત્રે વાર ૭ ભણી ગેવાસૂત્ર પોતાને હાથે તથા સ્નાત્રીયાને હાથે બાંધીએ। કુંભને મિંઢલ ઋદ્ધિ મરડાસીંગી, પ્રમુખ બાંધવા પડે તે પણ ઇણે મંત્રે મંત્રી બાંધવા ॥ ૭ ॥

અથ ભૂમિશુદ્ધિમંત્ર ૐ હ્રીં અર્હં ભૂર્ભુવઃસ્વશ્રીય સ્વાહા ॥ એણેં મંત્રે ફૂલવાસ મંત્રી સ્નાત્રભૂમી જલ પુષ્પ વાસ આછોટણુ કરીએ ॥ ૮ ॥

પછી પૂર્વ દિશાએ અથવા ઉત્તર દિશાએ પીઠ માંડીએ અને ૐ હ્રીં અર્હત્પીઠાય નમઃ। એ મંત્રે સાત વાર મંત્રી પીઠની પૂજા કરીએ, પછી શ્રીશાન્તિનાથ ભગવાનની પ્રતિમા સ્થાપિએ, તેનો મંત્રઃ-

ૐ નમો અર્હત્પરમેશ્વરાય ચતુર્મુખાય પરમેષ્ઠિને દિક્કુમારીપરિપૂજિતાય દેવાધિદેવાય ત્રૈલોક્યમહિતાય અત્ર પીઠે તિષ્ઠ તિષ્ઠ સ્વાહા ॥ આ મંત્ર ત્રણ વાર ભણી શ્રીશાન્તિનાથ ભગવાન્‌ની પંચતીર્થી પ્રતિમા સ્થાપિએ પછી ॥ ૯ ॥

સ્નાત્રજલશુદ્ધિઃ-ક્ષીરોદધિસ્વયંભૂશ્ચ સરોપદ્મમહાદ્રહે। શીતાશીતોદકાકુંભે જલેઽસ્મિન્ સંનિધિં કુરુ ॥ ૧ ॥

અમૃતે૦ ઇતિ જલસ્નપનીયજલશુદ્ધિ। ઇણ મંત્રે વાર ૭ મંત્રી કલશ ધોઈ ધૂપ કરવો પછે ભરવા ॥ ૧૦ ॥

ૐ હ્રીં શ્રીં પરમપરમાત્મને અનંતાનંતજ્ઞાનશક્તયે જન્મજરામૃત્યુનિવારણાય શ્રીમતે જિનેન્દ્રાય જલં યજામહે સ્વાહા। ઈમ ચંદન ૧ પુષ્પ ૨ અક્ષત ૩ નૈવેદ્ય ૪ ફલ ૫ દીપ ૬ ધૂપ ૮ યજામહે સ્વાહા। ઈમ અષ્ટપ્રકારી પૂજા મંત્ર ઇણે મંત્રે જલાદિ આઠે વાના ચઢાવવા. ઈમ મહોત્સવના દિવસ સુધી પ્રભુની સ્નાત્ર પૂજા કરીએ ॥ ૧૧ ॥

## ॥ કુભસ્થાપનવિધિ ॥

પ્રથમ પીઠની પૂજા કરી શ્રી શાંતિનાથ ભગવાનની પ્રતિમા સ્થાપી અને સ્નાત્ર ભણાવે પછી કુભ એક માટીનો, કાળા ડાઘ રહિત, અષ્ટમંગળ ચિતરેલો ધોઈ ધૂપીને કંઠે ગ્રીવાસૂત્ર બાંધી પછી* અઘેડાની લેખણથી કુભ ઉપર મંત્ર લખવો "ૐ હ્રીઁ શ્રીઁ સર્વોપદ્રવાન્ નાશય નાશય સ્વાહા" ॥ આ મંત્ર કેસરથી લખી કુભ મધ્યે કેસરનો સાથીયો કરવો પછી કુભ મધ્યે ધૂપ દેવો કુસુમાંજલિએ વધાવવો કંકુના છાટા નાખવા કુભના અંદર ચોખા, સોપારી, રૂપિયો અને ¹પંચરત્નની પોટલી સ્થાપવી પછી ઉભા થઈ નવકાર અથવા મોટી શાંતિ ગણતા અખોટ જળની અખંડ ધારાએ કુભ પરિપૂર્ણ ભરવો પછી નાગરવેલના પાન ચાર કંઠે મૂકી, ઉપર શ્રીફળ મૂકી, લીલો, રાતો રેશમી કકડો ગજ સવા ઢાકી ²ગ્રીવાસૂત્રથી બાંધીએ પછી ઉપર કેસર અને ફૂલે પૂજીએ, સોના-રૂપાના વરખ છાપીએ ફૂલનો હાર પહેરાવીએ પછી જે ઠેકાણે કુભ સ્થાપવો હોય ત્યાં કંકુનો સાથિયો³ કરી ચોખા સોપારી પૂરી ઉપર વ્રીહિ શેર સવાનો સાથિયો કરાવીએ પછી દેરાસર અથવા ભગવાનને ફરતી ત્રણ પ્રદક્ષિણા દઈ કુભને ગાજતે વાજતે "ૐ હ્રીઁ ઠઃ ઠઃ ઠ સ્વાહા" એ મંત્ર સાત વાર ભણી, શ્વાસ સ્થિર રાખી કુભને સ્વસ્તિક ઉપર સ્થાપવો કુભસ્થાનકે દીપ અખંડ રાખવો,ધૂપ ત્રણ કાળ કરવો કુભને વાસક્ષેપથી પૂજી કુસુમાંજલિ લઈ કાવ્ય બોલવું –

---

* અથવા સરેડાની જાણવી । ૧ પંચરત્ન – માણેક, મોતી, પ્રવાળ, ત્રાંબુ, સોનું ॥ ૨ મીંઢળ, મરડાસીંગી, ધરો, ડાભ અને નાડુ ॥ ૩ બિંબ જે સ્થાને હોય તેની જમણી બાજુમાં કુભ સ્થાપવો ॥ ∆ ગ્રીવાસૂત્ર–કંકણ મંત્ર પૃ૦ ૧ માં ।

પૂર્ણં યેન સુમેરુશૃંગસદૃશં ચૈત્યં સુદેદીપ્યતે,
યઃ કીર્તિં યજમાનધર્મકથનપ્રસ્ફૂર્જિતાં ભાષતે ।
યઃ સ્પર્ધાં કુરુતે જગત્ત્રયમહાદીપેન દોષારિણા,
સોઽયં મંગલરૂપમુખ્યગણનઃ કુમ્ભશ્ચિરં નન્દતાત્ ॥૧॥

આ કાવ્ય બોલી કુંભ વધાવવો.

પછી કુંભ આગળ ત્રણ ટંક સૌભાગ્યવતી સ્ત્રી પાસે ગહુંલી કરાવવી, માર્જાર પ્રમુખ હિંસક જીવને ત્યાં આવવા દેવા નહીં. રજસ્વલા પ્રમુખ મલિન સ્ત્રીની દૃષ્ટિ પડવા દેવી નહીં. સુવાસણ સ્ત્રીઓ પાસે ઉત્તમ ધવળ મંગળ ગીત ગવરાવવાં. ગાનારી સ્ત્રીઓને તંબોલાદિ દેવાં. શ્રાવક તથા શ્રાવિકાઓએ ત્યાં નરકાદિ દુઃખગર્ભિત, જિનમુનિના ઉપસર્ગગર્ભિત, આલોયણના સ્તવન તથા રાજિમતી પ્રમુખના વિલાપગર્ભિત ગીત ગાવાં નહીં. અનિત્ય અશરણ ભાવનાનાં ગીત વર્જવા. કુંભ પાસે ત્રણ ટંક સાત સ્મરણ ધૂપ દીપ સહિત ગણવાં, ઇતિ કુંભસ્થાપનવિધિ ॥

## ॥ અથ દીપસ્થાપનવિધિ ॥

પ્રથમ તાંબાનું દીપપાત્ર શેર સવા ઘી માય તેવું જીભવાળું, ધોઈ ધૂપી, કંકુથી પૂજી કુસુમાંજલિ અને ચોખાથી વધાવી તેમાં સોપારી, રૂપિયો અને પંચરત્નની પોટલી મૂકી પછી મીંઢળ, મરડાશિંગી બાંધી ૧૦૮ અથવા ૨૭ તારની દીવેટ મૂકી ઘૃતમંત્ર ભણતાં સૌભાગ્યવતી સ્ત્રી પાસે ઘૃત પૂરાવીએ તેનો મંત્ર—

ૐ ઘૃતમાયુર્વૃદ્ધિકરં ભવતિ પરં જૈનદૃષ્ટિસમ્પર્કાત્ । તત્સંયુક્તઃ પ્રદીપઃ પાતુ સદા ભાવદુઃખેભ્યઃ ॥ ૧ ॥ સ્વાહા ।

એ મંત્ર ત્રણ વાર કહી ઘૃત પૂરાવીએ પછી દીપ પ્રગટાવવો તેનો મંત્ર–

ૐ અર્હં–પઞ્ચજ્ઞાનમહાજ્યોતિર્મયાય ધ્વાન્તઘાતિને । દ્યોતનાય પ્રતિમાયા દીપો ભૂયાત્ સદાઽર્હતે ॥ ૧ ॥

એ મંત્ર ત્રણ વાર કહી દીપ પ્રગટાવવો પછી કુંભની જમણી બાજુએ જ્યાં દીપને સ્થાપવો છે ત્યાં કંકુનો સાથિયો કરી ઉપર પલાળેલી માટીનું સ્થાન કરીએ તે ઉપર દીપ સ્થાપી વાસક્ષેપ લઈ મંત્ર બોલીએ

" ૐ અગ્નયોઽસ્મિકાયા એકેન્દ્રિયા જીવા નિરવદ્યા અર્હત્પૂજાયા નિર્વ્યથા સન્તુ, નિષ્પાપા સન્તુ, સદ્ગતય સન્તુ ન મે સંઘટ્ટનહિંસાઽર્હદર્ચને ॥ " એ મંત્ર ત્રણ વાર ભણી દીપ તથા અગ્નિ શુદ્ધ કરીએ ઇતિ દીપસ્થાપનવિધિ ॥

## ॥ અથ જુવારા વાવવાનો વિધિ ॥

જુવારા શરાવલા ચાર અને આઠ કાળા ડાઘ વિનાના ધોળાવી તે મધ્યે પૈસો સોપારી મૂકી કાચી માટી અને અડાયા છાણાનો ભૂકો પૂરી તેમાં સધવા સ્ત્રીની પાસે અથવા કુંવારી કન્યા પાસે સાત ધાન્ય વવરાવીએ સાત ધાન્ય આ પ્રમાણે સમજવાં ૧ જવ, ૨ જુવાર, ૩ વરી, ૪ ચણા, ૫ અડદ, ૬ મગ અને ૭ ઘઉં તેમાંના શરાવલા ચાર કુંભની ચાર બાજુએ મૂકવા તેમાં દરરોજ જોઇએ તે પ્રમાણે પાણી સિંચવું ઇતિ જુવારા વાવવાનો વિધિ ॥

## શ્રી જિનાર્ચન તથા લઘુસ્નાત્રવિધિક્રમ ( પૃષ્ઠ ૧–૨૭ )

(૧) શાંતિનાથ ભગવંત ( પાષાણના ) સિંહાસનમાં સ્થાપન કરવા તથા ધાતુના શ્રી શાંતિનાથ ભગવંત અને શ્રી સિદ્ધચક્ર સ્થાપન કરવા (૨) કુંભસ્થાપન (૩) અખંડ દીપક સ્થાપન જુવારા વાવે

(૪) ભગવંતની અનેકપ્રકારી પૂજા, (જિનાર્ચન) અપ્, વનસ્પતિ ને અગ્નિનો મંત્ર ત્રણ વાર બોલવો. ગંધ-જલ અક્ષતાદિનો મંત્ર દશ વાર બોલવો. પુષ્પાંજલિ, લઘુસ્નાત્રાદિ વિધિ કરે.

(૫) બે સધવા સ્ત્રી ભગવંત આગળ ષટ્રસ નૈવેદ્ય (ભોજન)ના થાળ મુકે.

(૬) બે કુમારિકા ભગવંતની લુણ ઉતારવાની ક્રિયા કરે.

(૭) ભગવંતની સાત દીવાની આરતી તથા મંગળદીવો.

(૮) દશ દિક્પાલનું સંક્ષિપ્ત પૂજન. નવગ્રહનું સંક્ષિપ્ત પૂજન ( પૃ૦ ૧-૨૭ )

(૯) કાચી ઇંટોની વેદિકા પર ઘંટાકર્ણમૂર્તિ સ્થાપના વિધિ કરે.

(૧૦) વિધિકારક પીઠ નંગ ૭ સ્થાપન કરી અને પૂજાવિધિ કરે. (પૃ૦ ૨૯)

(૧૧) પછી ૭ ધાન્યના યવારાપાત્ર પીઠિકાઓની ચાર બાજુ ૨-૨ કુલ ૮ મૂકવા, પછી પીઠિકા આગલ ૧ દુધપાકપાત્ર, ૨ કરંબપાત્ર, ૩ ઘી સાકર લોટનું ચુરમું પાત્ર, ૪ ગોલ-ઘી-મમરાના પિંડ, ૫ માલપુડા પાત્ર, ૬ લાપસી પાત્ર, ૭ દુધનો ખીચડો પાત્ર. પછી નં ૭ કલશ સ્થાપવા. ૪ દીપક સ્થાપવા. પછી વિધિ અનુસાર હોમ કરવો. (પૃ૦ ૫૫)

## બૃહત્સ્નાત્રવિધિ તથા ઘંટાકર્ણમૂર્તિસ્થાપન ક્રમ (પૃષ્ઠ ૬૫-૮૦)

(૧) ત્રણ કુસુમાંજલિ.

(૨) આઠ સ્નાત્ર- ૧ ક્ષીર, ૨ દધિ, ૩ ઘી, ૪ શેરડીનો રસ, ૫ જલ, ૬ સહસ્રમૂલ, ૮ શતમૂલ, ૮ સર્વૌષધિ.

(૩) ધૂપ (૪) શક્રસ્તવ (૫) અભિષેકના ૧૯ કાવ્યો (૬) છેલ્લુ કાવ્ય બોલી ૧૦૮ અભિષેક કરવા

પૂજાઓ

૧ કસ્તૂરિકા વિલેપન ૨ પુષ્પમાલા, ૩ આભૂષણ-મુગટ-હાર વગેરે, ૪ ફૂલઢોકન, ૫ અક્ષતઢોકન, ૬ જલકલશ ઢોકન, ૭ ધૂપ, ૮ દીપ, ૯ ષટ્રસનૈવેદ્ય, ૧૦ સર્વધાન્યઢોકન, ૧૧ સર્વવેસવાર (સુંઠ, મરી, મઠ), ૧૨ સર્વૌષધિઢોકન, ૧૩ તાંબુલ ઢોકન, ૧૪ વસ્ત્ર પૂજા, ૧૫ સુવર્ણ રૌપ્ય-મુદ્રાપૂજન, ૧૬ કુસુમાંજલી પૂર્વક અષ્ટમંગલ પૂજન ૧૭ પુષ્પ માલા જિનબિંબોપરિ સ્થાપન, ૧૮ આરતી, મંગલદીવો, આજ્ઞાહીન૦ પુષ્પારોપણ, વિસર્જન

(૧) બૃહત્સ્નાત્રજલથી (ઘંટાકર્ણ) મૂર્તિ અભિષેક (૨) તીર્થજલ અભિષેક

(૩) કસ્તૂરી-કેશરાદિ વિલેપન (૪) દશ દિશી બલિબાકુલા પ્રક્ષેપ

(૫) મુખ્ય વેદિકાપર ઘંટાકર્ણમૂર્તિ સ્થાપન કરી લગ્નવેલાએ મંત્રપૂર્વક વાસક્ષેપ (પ્રતિષ્ઠા) કરે (પૃ૦ ૭૮)

(૬) ગંધ-પુષ્પાદિ પૂજન

(૭) મધ્યરાત્રે બલિપાત્ર મુકે (લાપસીપાત્ર નં ૨, વડાના પાત્ર નંગ ૨ જલના ઘટ નં ૨ દીપક નં ૨)

(૮) સપ્તપીઠ વિસર્જન

## २५ કુસુમાંજલિ વિધિક્રમ પરિશિષ્ટ A

૧ ચંદન અર્ચન.
૨ કુંકુમ અર્ચન.
૩ યક્ષકર્દમ વિલેપન.
૪ કર્પૂર આરોપણ.
૫ વાસક્ષેપ.
૬ કસ્તૂરીલેપ.
૭ કાલાગરુ લેપ.
૮ પુષ્પાલંકાર અવતરણ.
૯ સ્નપનપીઠક્ષાલન.
૧૦ બિંબમાર્જન.
૧૧ પુષ્પ–આરોપણ.
૧૨ ફલ–ઢૌકન
૧૩ અગરુક્ષેપ.
૧૪ સંયુક્તધૂપ–ઉત્ક્ષેપણ.
૧૫ જલપૂજા.
૧૬ અક્ષત આરોપણ.
૧૭ પંચાંગરક્ષા. (પંચાગરક્ષામાં ૧ લલાટ, ૨ નયન,
૩ હૃદય, ૪ સર્વાંગ, ૫ પીઠ)
૧૮ નિર્લુંછન–કરણ.
૧૯ માલારોપણ.
૨૦ અપરાધક્ષામણ.
૨૧ દીપદાન.
૨૨ દર્પણ ઢૌકન.
૨૩ અધિકૃતજિનસ્તોત્ર
૨૪ વિજ્ઞપ્તિકા.
૨૫ ક્ષણધ્યાનમ.



શ્રી ખરતરગચ્છાલંકાર જિન વર્ધમાનસૂરિ વિરચિત આચાર દિનકર ગ્રથાન્તર્ગત- (અર્હન્મહાપૂજન)

## ॥ શ્રી-શાન્તિક-મહાપૂજન-વિધિ ॥

તત્રાદૌ ગુરુર્ગૃહ્યગુરુર્વા સુસ્નાત કંકણમુદ્રાંકિતકર સદશાંશ્વેતવસ્ત્રધરો ભવેત્ શાન્તિકારોપિ તાદૃગ્વેષભૂષણધારી સભ્રાતૃપુત્રો ભવેત્ ગીતનૃત્યવાદ્યાદિનારીમંગલગાયનાચાર ચ પ્રગુણીકુર્યાત્ તતો બૃહત્સ્નાત્રવિધિમારભેત પ્રથમ સ્નાત્રપીઠે શ્રી શાન્તિનાથપ્રતિમા સ્થાપયેત્ તત્સ્થાપનવિધિસ્તુ ઘંટાકર્ણપ્રતિષ્ઠાવિધૌ પૂર્વ ૨ પૃષ્ઠમધ્યે દત્ત, તદનુસારેણ શાન્તિનાથપ્રતિમા પીઠે સ્થાપયિત્વા તદનતર પૂર્વમર્હત્કલ્પવિધિના (જિનાર્ચનવિધિલઘુસ્નાત્રાદિપૂર્ણાં પૂજા વિધાય તત ) બૃહત્સ્નાત્રવિધિયુક્ત્યા પચવિશતિકુસુમાંજલિક્ષેપ વિદધ્યાત્ ઇતિ

## ॥ જિનાર્ચનપૂજા ॥

જિનાર્ચન તથા લઘુસ્નાત્રવિધિસ્તુ પૂર્વ ઘંટાકર્ણપ્રતિષ્ઠાવિધૌ પૃષ્ઠ ૨ ત ૨૮ પૃષ્ઠ પર્યંત દર્શિત , પ્રાન્તે આરાત્રિક મંગલદીપક્ષામણાદિવિધિ કરણીય ઇતિ પ્રથમદિને પ્રાત કરણીયો વિધિ ।

## ॥ કુસુમાંજલિ ॥

પ્રથમદિને મધ્યાહ્ને પચવિંશતિકુસુમાંજલિક્ષેપ -વિદધ્યાત્ તદ્વિધિસ્તુ ઘંટાકર્ણપ્રતિષ્ઠાવિધૌ પરિશિષ્ટ પૃષ્ઠ ૧ ત પૃષ્ઠ ૧૬ પર્યંત દત્ત કુસુમાંજલિપ્રાન્તે આરાત્રિક મંગલદીપ ક્ષામણાદિવિધિ ચ કુર્યાત્ ઇતિ પ્રથમદિન-મધ્યાહ્નવિધિ

## ॥ અથ દ્વિતીયદિને કરણીયો બૃહત્સ્નાત્રાન્તર્ગતઃ સપ્તપીઠપૂજનવિધિઃ ॥

તતો, બિમ્બાગ્રે પવિત્રાણિ સ્વર્ણરૂપ્યતામ્રકાંસ્યમયાનિ વા સપ્તપીઠાનિ ન્યસેત ॥ તત્ર ॥

પ્રથમપીઠે— પંચપરમેષ્ઠિસ્થાપનમક્ષરૈસ્તિલકૈર્વા માલાક્રમેણ કાર્યમ્ ॥
દ્વિતીયપીઠે— દિક્ક્રમેણ દિક્પાલસ્થાપનં તથૈવ ॥
તૃતીયપીઠે— ચતુર્દિક્ષુ ત્રયં, ત્રયં, કૃત્વા, દ્વાદશરાશિસ્થાપનમ્ ॥
ચતુર્થપીઠે— ચતુર્દિક્ષુ સપ્તકં સપ્તકં કૃત્વાષ્ટાવિંશતિનક્ષત્રસ્થાપનમ્ ॥
પંચમપીઠે— દિક્ક્રમેણ નવગ્રહસ્થાપનં વિધેયમ્ ॥
ષષ્ઠપીઠે— ચતુર્દિક્ષુ, ચતુષ્કં ચતુષ્કં કૃત્વા ષોડશવિદ્યાદેવીસ્થાપનમ્ ॥
સપ્તમપીઠે— ગણપતિ, કાર્તિકેય, ક્ષેત્રપાલ, પુરદેવતા, ચતુર્ણિકાયદેવસ્થાપનમ્.

અથ પ્રથમ પીઠે પરમેષ્ઠિપૂજનં-તથાહિ પ્રથમં પુષ્પાંજલિં ગૃહીત્વા-

અર્હન્ત ઈશાઃ સકલાશ્ચ સિદ્ધા, આચાર્યવર્યા અપિ પાઠકેન્દ્રાઃ;
મુનીશ્વરાઃ સર્વસમીહિતાનિ કુર્વન્તુ રત્નત્રયયુક્તિભાજઃ ॥ ૧ ॥

ઇતિ અર્હદાદિષુ પુષ્પાંજલિક્ષેપઃ-તતોઽર્ઘ્યપાદ્યાદિ પ્રગુણીકૃત્યાર્હતઃ પ્રતિ-

વિશ્વાગ્રસ્થિતિશાલિનઃ સમુદયા, સંયુક્તસન્માનસા. નાનારૂપવિચિત્રચિત્રરચિતાઃ સંત્રાસિતાંતર્દ્વિષઃ;
સર્વાધ્વપ્રતિભાસનૈકકુશલાઃ સર્વે નતા સર્વદાઃ શ્રીમત્તીર્થંકરા ભવન્તુ ભવિનાં, વ્યામોહવિચ્છિત્તયે. ।૧।

ૐ નમો ભગવદ્ભ્યોઽર્હદ્ભ્ય સુરાસુરનરપૂજિતેભ્યસ્ત્રીલોકનાથકેભ્યોઽષ્ટકર્મનિર્મુક્તેભ્યોઽષ્ટાદશદોષરહિતેભ્ય ચતુસ્ત્રિંશદતિશયયુક્તેભ્ય પચત્રિંશદ્વચનગુણસહિતેભ્યો ભગવતોઽર્હન્ત સર્વવિદ સર્વગા, ઇહ શાન્તિકપૂજામહોત્સવે આગચ્છન્તુ આગચ્છન્તુ સ્વાહા ઇદમર્ધ્યં, પાદ્ય, બલિં, ચરૂ, ગૃહ્ણન્તુ ગૃહ્ણન્તુ સન્નિહિતા ભવન્તુ સ્વાહા જલ ગૃહ્ણન્તુ (૨) સ્વાહા ગન્ધ ગૃ० પુષ્પ ગૃ०, અક્ષતાન્ ગૃ०, ફલાનિ ગૃ०, મુદ્રા ગૃ०, ધૂપ ગૃ० દીપ ગૃ०, નૈવેદ્ય ગૃ०, સર્વોપચારાન્ ગૃ०, શાન્તિ કુર્વન્તુ (૨) તુષ્ટિં કુ०, પુષ્ટિં કુ०, ઋદ્ધિં કુ०, વૃદ્ધિં કુર્વ० સર્વસમીહિતાનિ કુર્વન્તુ કુર્વન્તુ સ્વાહા (સ્વાહા સર્વત્ર યોજ્યમ્) ઇત્યેતેમ ત્રેરાહ્વાન સન્નિહિતકરણમ્ જલ, ગન્ધ, પુષ્પાક્ષત, ફલ, ધૂપ, દીપ, નૈવેદ્યદાન, અર્ધ્યપાદ્યદાન ચ ઇત્યર્હત્પૂજાક્રમ । તત સિદ્ધાન્ પ્રતિ–

યદીર્ઘકાલમુનિકાચિતબન્ધબદ્ધ,–મષ્ટાત્મક વિષમચારમભેદ્ય કર્મ,
તત્સનિહત્ય પરમ પદમાપિ યૈસ્તે સિદ્ધા દિશન્તુ મહતીમિહ કાર્યસિદ્ધમ્ ॥ ૧ ॥

ૐ નમ સિદ્ધેભ્યો, અશરીરેભ્યો, વ્યપગતકર્મબન્ધનેભ્ય–શ્ચિદાનન્દમયેભ્યો, અનન્તવીર્યેભ્યો, ભગવન્ત સિદ્ધા ઇહ શાન્તિકપૂજામહોત્સવે આગચ્છન્તુ આગચ્છન્તુ શેષ પૂર્વવત્ ઇતિ સિદ્ધપૂજાક્રમ ॥ તત આચાર્યાન્ પ્રતિ–

વિશ્વસ્મિન્નપિ વિષ્ટપે દિનકરીભૂત મહાતેજસા, યૈરર્હદ્ભિરિતેષુ તેષુ નિયત મોહાન્ધકાર જગત્,
જાતં તત્ર ચ દીપતામવિકલા, પ્રાપુ પ્રકાશોઽગમા–દાચાર્યા પ્રથયન્તુ તે તનુભૃતામાત્મપ્રબોધોદયમ ॥ ૧ ॥

ૐ નમઃ આચાર્યેભ્યો, વિશ્વપ્રકાશેભ્યો, દ્વાદશાંગગણિપિટકધારિભ્યઃ પંચાચારરતેભ્યો ભગવન્ત આચાર્યો ઇહ શાન્તિકપૂજામહોત્સવે આગચ્છન્તુ આગચ્છન્તુ. શેષં પૂર્વવત્. ઇત્યાચાર્યપૂજા । તત ઉપાધ્યાયાન્ પ્રતિ–

પાષાણતુલ્યોપિ નરો યદીય– પ્રસાદલેશાલ્લભતે સપર્યામ્;
જગદ્ધિતઃ પાઠકસંચયઃ સ, કલ્યાણમાલાં વિતનોત્વભીક્ષ્ણમ્.

ૐ નમ ઉપાધ્યાયેભ્યો નિરંતરદ્વાદશાંગપઠનપાઠનરતેભ્યઃ સર્વજન્તુહિતેભ્યો, દયામયેભ્યો, ભગવન્ત ઉપાધ્યાયા ઇહ શાન્તિકપૂજામહોત્સવે આગચ્છન્તુ૦ શેષં પૂર્વવત્. ઇત્યુપાધ્યાયપદપૂજા. તતઃ સાધૂન્ પ્રતિ–

સંસારનીરધિમવેત્ય, દ્વરન્તમેવ, યૈઃ સંયમાખ્યવહનં પ્રતિપન્નમાશુ;
તે સાધકાઃ શિવપદસ્ય જિનાભિષેકે, સાધુવ્રજા વિરચયન્તુ મહાપ્રબોધમ્ ॥ ૬ ॥

ૐ નમઃ સર્વસાધુભ્યો, મોક્ષમાર્ગસાધકેભ્યઃ શાન્તેભ્યોઽષ્ટાદશસહસ્રશીલાંગધારિભ્યઃ પંચમહાવ્રતનિષ્ઠિતેભ્યઃ પરમહિતેભ્યો ભગવન્તઃ સાધવ ઇહ શાન્તિકપૂજામહોત્સવે, આગચ્છન્તુ૦ (૨) શેષં પૂર્વવત્. ઇતિ સાધુપૂજા। અથ પંચપરમેષ્ઠિનાં પરિપિંડિતપૂજા–

ૐ નમઃ સર્વતીર્થંકરેભ્યઃ સર્વગતેભ્યઃ સર્વવિદ્ભ્યઃ સર્વદર્શિભ્યઃ સર્વહિતેભ્યઃ સર્વદેભ્યઃ ૐ નમો ભગવદ્ભ્યઃ સિદ્ધેભ્યઃ, ભગવદ્ભ્ય આચાર્યેભ્યો, ભગવદ્ભ્ય ઉપાધ્યાયેભ્યો, ભગવદ્ભ્યઃ સાધુભ્યો ભગવન્તઃ પંચપરમેષ્ઠિનઃ ઇહ શાન્તિકપૂજામહોત્સવે, સાતિશયાઃ સપ્રાતિહાર્યાઃ સવચનગુણાઃ સજ્ઞાનાઃ સસંઘાઃ સદેવાસુરનરાઃ પ્રસીદન્તુ ઇદમર્ઘ્યં

પાદ્ય ગૃહ્ણન્તુ (૨) ગન્ધ ગૃ૦ (૨) પુષ્પ ગૃ૦ (૨) ધૂપ ગૃ૦ (૨) દીપ ગૃ૦ (૨) અક્ષતાન્ ગૃ૦-(૨) નૈવેદ્ય ગૃ૦ (૨) સર્વોપચારાન્ ગૃ૦ શાન્તિ કુર્વન્તુ (૨) તુષ્ટિં કુ૦ (૨) પુષ્ટિં કુ૦ (૨) ઋદ્ધિ કુ૦ (૨) વૃદ્ધિ કુ૦ (૨) સર્વસમીહિતાનિ કુ૦ (૨) સ્વાહા અનેન પચપરમેષ્ઠિના પરિપિંડિતપૂજા એવ પચપરમેષ્ઠિપૂજન વિધાય પચહસ્તવસ્ત્રાચ્છાદનમ્ ઇત્યાદ્યપીઠકમ્ ॥ આ૦ દિ૦ પૃ૦ ૧૫૯ તમે ॥

## ॥ અથ દ્વિતીય-પીઠપૂજનમ્ ॥

અથ દ્વિતીયપીઠે દિક્પાલપૂજનમ્ ઘટાકર્ણપ્રતિષ્ઠાવિધૌ પૃષ્ઠ ૪૭ ત પૃ૦ ૬૧ પર્યં તદશદિક્પાલપૂજન પૂર્વોક્તવિધિના વિધાય તત પીઠે દશહસ્તવસ્ત્રાચ્છાદન ઇતિ દ્વિતીયપીઠમ્

## ॥ અથ તૃતીય-પીઠપૂજનમ્ ॥

અથ તૃતીયપીઠે દ્વાદશરાશિપૂજન યથા-પુષ્પાજલિં ગૃહીત્વા,-

મેષ-વૃષ-મિથુન-કર્કટ-સિંહ-કનીવાણિજાલિચાપધરા મકર-ઘટ-મીન-સજ્ઞા સનિહિતા રાશય સન્તુ ॥ ૧ ॥

ઇતિ રાશિપીઠોપરિ પુષ્પાજલિક્ષેપ તતો મેષ પ્રતિ-

મગલસ્ય નિવાસાય, સૂર્યોચ્ચત્વકરાય ચ, મેષાય પૂર્વસસ્થાય, નમ પ્રથમરાશયે ॥ ૧ ॥

ૐ નમો મેષાય મેષ ઇહ શાન્તિકપૂજામહોત્સવે આગચ્છ આગચ્છ ઇદમર્ઘ્ય પાદ્ય બલિં ચરુ આચમનીય ગૃહાણ (૨) સન્નિહિતો ભવ (૨) સ્વાહા જલ ગૃહાણ (૨) ગન્ધ ગૃ૦ (૨) અક્ષતાન્ ગૃ૦ ફલાનિ૦ પુષ્પ૦ ધૂપ૦

દીપં૦ નૈવેદ્યં, સર્વોપચારાન્ ગૃહાણ (૨) શાન્તિ કુરુ (૨) તુષ્ટિં૦ પુષ્ટિં૦ ઋદ્ધિં૦ વૃદ્ધિં૦ સર્વસમિહિતાનિ યચ્છ (૨) સ્વાહા. અનેન મંત્રેણ સર્વોપચારૈઃ મેષપૂજનમ્. વૃષં પ્રતિઃ—

ચન્દ્રોચ્ચકરણે યામ્ય,-દિશિ સ્થાયી કવેર્ગૃહમ્, વૃષઃ સર્વાણિ પાપાનિ, શાન્તિકેઽત્ર નિકૃન્તતુ ॥ ૨ ॥

ૐ નમો વૃષાય૦ વૃષ ઇહ શાન્તિકપૂજામહોત્સવે૦ શેષં પૂર્વવત્ ॥ ૨ ॥ મિથુનં પ્રતિ–

શશિનન્દનગેહાય, રાહૂચ્ચત્વકરાય ચ, પશ્ચિમાશાશ્રિતાયાસ્તુ મિથુનાય નમસ્સદા. ॥ ૩ ॥

ૐ નમો મિથુનાય૦ મિથુન ઇહ શાન્તિકપૂજામહોત્સવે૦ શેષં પૂર્વવત્. કર્કં પ્રતિ–

વાક્પતેરુચ્ચત્વકરણં, શરણં તારકેશિતુઃ, કર્કટં ધનદાશાસ્થં, પૂજયામો નિરંતરમ્ ॥ ૪ ॥

ૐ નમો કર્કાય૦ કર્ક ઇહ શાન્તિકપૂજામહોત્સવે શેષં પૂર્વવત્. સિંહં પ્રતિ–

પદ્મિનીપતિસંવાસઃ પૂર્વાશાકૃતસંશ્રયઃ, સિંહઃ સમસ્તદુઃખાનિ, વિનાશયતુ ધીમતામ્ ॥ ૫ ॥

ૐ નમો સિંહાય૦ સિંહ ઇહ શાન્તિકપૂજામહોત્સવે૦ શેષં પૂર્વવત્. કન્યાં પ્રતિ–

બુધસ્ય સદનં રમ્યં, તસ્યૈવોચ્ચત્વકારિણી–કન્યા કૃતાન્તદિગ્વાસા, સમાનન્દં પ્રયચ્છતુ ॥ ૬ ॥

ૐ નમઃ કન્યાયૈ૦ કન્યે ઇહ શાન્તિક–પૂજા–મહોત્સવે૦ શેષં પૂર્વવત્. તુલાં પ્રતિઃ–

યો દૈત્યાનાં મહાચાર્ય–સ્તસ્યાવાસત્વમાગતઃ, શનૈરુચ્ચત્વદાતાઽસ્તુ પશ્ચિમાસ્થતુલાધરઃ ॥ ૭ ॥

ૐ નમસ્તુલાધરાય૦ તુલાધર ઇહ શાન્તિકપૂજામહોત્સવે૦ શેષં પૂર્વવત્. વૃશ્ચિકં પ્રતિ–

ભૌમસ્ય તુ ખલુ ક્ષેત્ર ધનદાશાવિભાસક –વૃશ્ચિકો દુ ખસઘાત શાન્તિકેડત્ર નિહન્તુ ન ॥ ૮ ॥

ૐ નમો વૃશ્ચિકાય૦ વૃશ્ચિક ઇહ શાન્તિકપૂજામહોત્સવે૦ શેષ પૂર્વવત્ ધન્વિન પ્રતિ–

સર્વદેવગણાચાર્યસ્ય, સદન પદદાયિન , સુરેન્દ્રાશાસ્થિતો ધન્વી, ધનવૃષ્ટિ કરોતુ ન ॥ ૯ ॥

ૐ નમો ધન્વિને૦ ધન્વિન્ ઇહ શાન્તિકપૂજામહોત્સવે૦ શેષ પૂર્વવત્ મકર પ્રતિ–

નિવાસ સૂર્યપુત્રસ્ય, ભૂમિપુત્રોચ્ચતાકર મકરો દક્ષિણાસસ્થ સ સ્થાભીતિ વિહન્તુ ન ॥ ૧૦ ॥

ૐ નમો મકરાય૦ મકર ઇહ શાન્તિકપૂજામહોત્સવે૦ શેષ પૂર્વવત્ કુભ પ્રતિ–

ગ્રહેશતનયસ્થાન પશ્ચિમાનદદાયક , કુભ કરોતુ નિર્દભ, પુણ્યારભ મનીષિણામ્ ॥ ૧૧ ॥

ૐ નમ કુભાય૦ કુભ ઇહ શાન્તિકપૂજામહોત્સવે૦ શેષ પૂર્વવત્ મીન પ્રતિ–

કવેરુચ્ચત્વદાતાર, ક્ષેત્ર સુરગુરોરપિ, વન્દામહે નૃધર્માશા–પાવન મીનમુત્તમમ્ ॥ ૧૨ ॥

ૐ નમો મીનાય મીન ઇહ શાન્તિકપૂજામહોત્સવે૦ શેષ પૂર્વવત્ . એભિર્મન્ત્રૈ પ્રત્યેકપૂજા તતોડનન્તર

ૐ મેષ–વૃષ–મિથુન–કર્ક–સિંહ–કન્યા–તુલા–વૃશ્ચિક–ધનુ–મકર–કુભ–મીના સર્વે રાશય સ્વસ્વસ્વામ્યધિષ્ઠિતા ઇહ શાન્તિકપૂજામહોત્સવે આગચ્છન્તુ (૨) ઇદમર્ઘ્ય પાદ્ય બલિ ચરુમ્ આચમનીય ગૃહ્ણન્તુ (૨) સન્નિહિતા ભવન્તુ (૨) સ્વાહા જલ ગૃ૦ (૨) ગન્ધ ગૃ૦ અક્ષતાન્૦ ફલાનિ૦ મુદ્રા૦ પુષ્પ૦ ધૂપ૦ દીપ૦ નૈવેદ્ય સર્વોપચારાન્૦

શાંતિં કુર્વન્તુ તુષ્ટિં૦ પુષ્ટિં૦ ઋદ્ધિં૦ વૃદ્ધિં૦ સર્વસમીહિતાનિ યચ્છન્તુ યચ્છન્તુ સ્વાહા. અનેન સર્વશાશીનાં પરિપિંડિતપૂજા ॥ તતઃ પીઠસ્ય દ્વાદશહસ્તવસ્ત્રેણાચ્છાદનમ્, ઇતિ તૃતીયપીઠ પૂજનમ્ ૨૨૦ પૃ૦ તઃ ૨૨૧ પૃ૦ પર્યંતે આ૦ દિ૦.

## ॥ અથ ચતુર્થપીઠપૂજનમ્ ॥

તતો નક્ષત્રપીઠે પુષ્પાંજલિં ગૃહીત્વા–

નાસત્યપ્રમુખા દેવા અધિષ્ઠિતનિજોડવઃ, અત્રેત્ય શાન્તિકે સન્તુ સદા સન્નિહિતા સતામ્.

ઇતિ નક્ષત્રપીઠે પુષ્પાંજલિક્ષેપઃ તતો અશ્વિનીં પ્રતિ–

ૐ જ્વીં નમો નાસત્યાભ્યાં સ્વાહા. ઇતિ મૂલમંત્રઃ. ૐ નમો નાસત્યાભ્યાં, અશ્વિનીસ્વામિભ્યાં નાસત્યૌ ઇહ શાન્તિક–પૂજા–મહોત્સવે આગચ્છતં (૨) ઇદમર્ઘ્યં પાદ્યં, બલિં, ચરું, આચમનીયં ગૃહ્ણીતં (૨) સન્નિહિતૌ ભવતં (૨) સ્વાહા. જલં ગૃહ્ણીતં (૨) ગન્ધં૦ અક્ષતાન્૦ ફલાનિ૦ મુદ્રાં૦ પુષ્પં૦ ધૂપં૦ દીપં૦ નૈવેદ્યં૦ સર્વોપચારાન્ ગૃહ્ણીતં (૨) શાન્તિં કુરુતં (૨) તુષ્ટિં૦ પુષ્ટિં૦ ઋદ્ધિં૦ વૃદ્ધિં૦ સર્વસમીહિતાનિ દદતં (૨) સ્વાહા. દ્વિવચનમ્ ॥૧॥ ભરણીં પ્રતિ–

ૐ, યં, યં, નમો યમાય સ્વાહા. ॥ ઇતિ મૂલ૦ ॥ ૐ નમો યમાય. ભરણી–સ્વામિને યમ ઇહ શાન્તિક–પૂજામહોત્સવે આગચ્છ, આગચ્છ ઇદમર્ઘ્યં, પાદ્યં, બલિં ચરું, આચમનીયં, ગૃહાણ (૨) સન્નિહિતો ભવ (૨)

સ્વાહા, જલ ગૃહાણ (૨) ગન્ધ૦ અક્ષતાન્૦ ફલાનિ૦ મુદ્રા૦ પુષ્પ૦ ધૂપ૦ દીપ૦ નૈવેદ્ય૦ સર્વોપચારાન્ ગૃહાણ (૨) તુષ્ટિં૦ પુષ્ટિ૦ ઋદ્ધિ૦ વૃદ્ધિ૦ સર્વસમીહિતાનિ દેહિ (૨) સ્વાહા એકવચનમ્ ॥ ૨॥ કૃતિકા પ્રતિ–

ૐ, ર, ર, નમો અગ્નયે સ્વાહા ૐ નમોઽગ્નયે કૃતિકાસ્વામિને અગ્ને ઇહ૦ શેષ પૂર્વવત્ એકવચનમ ॥ ૩ ॥ રોહિણી પ્રતિ–

ૐ બ્રહ્મ-બ્રહ્મણે નમ સ્વાહા ૐ નમો બ્રહ્મણે રોહિણીશ્વરાય બ્રહ્મન્ ઇહ૦ શેષ પૂર્વવત્ એકવચનમ્ ॥૪॥ મૃગશિર પ્રતિ–

ૐ, ચ, ચ, ચ, નમશ્ચન્દ્રાય સ્વાહા ૐ નમશ્ચન્દ્રાય મૃગશીરોઽધીશાય, ચન્દ્ર ઇહ૦ શેષ પૂર્વવત્ એકવચનમ્ ॥ ૫ ॥ આર્દ્રા પ્રતિ–

ૐ રુ, રુ, નમો રુદ્રાય સ્વાહા ૐ નમો રુદ્રાય, આર્દ્રેશ્વરાય, રુદ્ર ઇહ૦ શેષ પૂર્વવત્ એકવચનમ્ ॥ ૬ ॥ પુનર્વસુ પ્રતિ–

ૐ જાનિ, જાનિ, નમો અદિતયે સ્વાહા ૐ નમો અદિતયે, પુનર્વસુસ્વામિન્યૈ અદિતે ઇહ૦ શેષ પૂર્વવત્ એકવચનમ્ સ્ત્રીલિંગે સન્નિહિતા ભવ ભવ ઇતિ ॥ ૭॥ પુષ્ય પ્રતિ–

ૐ જીવ, જીવ, નમો બૃહસ્પતયે સ્વાહા ૐ નમો બૃહસ્પતયે પુષ્યાધીશાય બૃહસ્પતે ઇહ૦ શેષ પૂર્વવત્ એકવચનમ્ ॥ ૮ ॥ આશ્લેષા પ્રતિ–

ૐ ફું, ફું, નમઃ ફણિભ્યઃ સ્વાહા. ૐ નમઃ ફણિભ્યઃ આશ્લેષાસ્વામિભ્યઃ ફણિન ઇહ શાન્તિકપૂજામહોત્સવે આગચ્છત (૨) ઇદમર્ધ્યં, પાદ્યં, બલિ ચરું,, ગૃહ્ણીત (૨) સન્નિહિતા ભવત (૨) સ્વાહા, જલં ગૃહ્ણીત (૨) ગન્ધં, અક્ષતાન્, ફલાનિ, મુદ્રાં, પુષ્પં, ધૂપં, દીપં, નૈવેદ્યં, સર્વોપચારાન્ શાન્તિં કુરુત (૨) તુષ્ટિં૦ પુષ્ટિં૦ ઋદ્ધિં૦ વૃદ્ધિં૦ સર્વસમીહિતાનિ દદત (૨) સ્વાહા. બહુવચનપાઠઃ ॥ ૯ ॥ મઘાં પ્રતિ–

ૐ સ્વધા નમઃ પિતૃભ્યઃ સ્વાહા. ૐ નમઃ પિતૃભ્યો મઘેશેભ્યઃ પિતર ઇહ૦ શેષં પૂર્વવત. બહુવચનપાઠઃ ॥ ૧૦ ॥ પૂર્વાફાલ્ગુનીં પ્રતિ–

ૐ ૐ નમો યોનયે સ્વાહા. ૐ નમો યોનયે પૂર્વા-ફાલ્ગુની-સ્વામિન્યૈ, યોને ઇહ૦ શેષં પૂર્વવત્ ॥ એકવચનમ્. સ્ત્રીલિંગે. સન્નિહિતા ભવ (૨) ઇતિ ॥ ૧૧ ॥ ઉત્તરાફાલ્ગુનીં પ્રતિ–

ૐ ઘૃણિ (૨) નમો અર્યમ્ણે, ઉત્તરાલ્ગુની- સ્વામિને સ્વાહા. ૐ અર્યમન્ ઇહ૦ શેષં પૂર્વવત્॥ એકવચનમ ॥ ૧૨ ॥ હસ્તં પ્રતિ–

ૐ ઘૃણિ (૨) નમો દિનકરાય સ્વાહા. ૐ નમો દિનકરાય હસ્તસ્વામિને દિનકર ઇહ૦ શેષં પૂર્વવત્. એકવચનમ્ ॥ ૧૩ ॥ ચિત્રાં પ્રતિ–

ૐ તક્ષ તક્ષ નમો વિશ્વકર્મણે સ્વાહા. ૐ નમો વિશ્વકર્મણે, ચિત્રેશાય વિશ્વકર્મન્ ઇહ૦ શેષં પૂર્વવત્. એકવચનમ્. ॥ ૧૪ ॥ સ્વાતિં પ્રતિ–

ॐ य य नमो वायवे स्वाहा ॐ नमो वायवे स्वातीशाय वायो ईह० शेषं पूर्वंवत् एकवचनम् ॥ १५ ॥ विशाखा प्रति–

ॐ वषट् नम ईन्द्राय स्वाहा ॐ र र र नमो अग्नये स्वाहा ईति मूलमन्त्रौ ॐ नम ईन्द्राग्निभ्या विशाखास्वामिभ्या ईन्द्राग्नी ईह० शेष पूर्वंवत् द्विवचनम् ॥ १६ ॥ अनुराधा प्रति–

ॐ नम घृणि घृणि नमो मित्राय स्वाहा ॐ नमो मित्राय अनुराधेश्वराय मित्र ईह० शेष पूर्वंवत् एकवचनम् ॥ १७ ॥ ज्येष्ठा प्रति–

ॐ वषट् नम ईन्द्राय स्वाहा ॐ नम ईन्द्राय ज्येष्ठेश्वराय ईन्द्र ईह० शेष पूर्वंवत् एकवचनम् ॥ १८ ॥ मूल प्रति–

ॐ प प नमो निर्ऋतये स्वाहा ॐ नमो नैर्ऋताय, मूलाधीशाय, नैऋत ईह० शेष पूर्वंवत एकवचनम् ॥ १९ ॥ पूर्वाषाढा प्रति–

ॐ व व नमो जलाय स्वाहा ॐ नमो जलाय पूर्वाषाढास्वामिने जल ईह० शेष पूर्वंवत् एकवचनम् ॥ २० ॥ उत्तराषाढा प्रति–

ॐ विश्व, विश्व, नमो विश्वदेवेभ्य स्वाहा ॐ नमो विश्वदेवेभ्य उत्तराषाढास्वामिभ्य विश्वेदेवा ईह० शेष पूर्वंवत् बहुवचनम् ॥ २१ ॥ अभिजित प्रति–

ॐ બ્રહ્મ, બ્રહ્મ, નમો બ્રહ્મણે સ્વાહા. ॐ નમો બ્રહ્મણે અભિજિદધીશાય બ્રહ્મન્ ઇહ૦ શેષં પૂર્વવત. એકવચનમ્ ॥ ૨૨ ॥ શ્રવણં પ્રતિ–

ॐ નમો વિષ્ણવે સ્વાહા. ॐ નમો વિષ્ણવે શ્રવણાધીશાય વિષ્ણો ઇહ૦ શેષં પૂર્વવત્. એકવચનમ ॥ ૨૩ ॥ ધનિષ્ઠાં પ્રતિ–

ॐ નમો વસુભ્યઃ સ્વાહા. ॐ નમો વસુભ્યો ધનિષ્ઠેશેભ્યઃ વસવ ઇહ૦ શેષં પૂર્વવત્. બહુવચનમ્ ॥ ૨૪ ॥ શતભિષજં પ્રતિ–

ॐ વં વં નમો વરુણાય સ્વાહા. ॐ નમો વરુણાય શતભિગધીશાય વરુણ ઇહ૦ શેષં પૂર્વવત્. એકવચનમ ॥ ૨૫ ॥ પૂર્વાભદ્રપદાં પ્રતિ–

ॐ નમો અજપાદાય સ્વાહા. ઇતિ મૂલ૦ ॐ નમો અજપાદાય પૂર્વાભદ્રપદેશ્વરાય અજપાદ ઇહ૦ શેષં પૂર્વવત્ એકવચનમ્ ॥ ૨૬ ॥ ઉત્તરાભદ્રપદાં પ્રતિ–

ॐ નમો અહિર્બુધ્નાય સ્વાહા. ॐ નમો અહિર્બુધ્નાય ઉત્તરાભદ્રપદેશ્વરાય અહિર્બુધ્ન ઇહ૦ શેષં પૂર્વવત્. એકવચનમ્ ॥ ૨૭ ॥ રેવતીં પ્રતિ–

ॐ ઘૃણિ ઘૃણિ નમઃ પૂષ્ણે સ્વાહા. ॐ નમો પુષ્ણે રેવતીશાય. પૂષન્ ઇહ૦ શેષં પૂર્વવત્. એકવચનમ્ ॥૨૮॥ એતેષાં મંત્રેણ પ્રત્યેકં નક્ષત્રપૂજા. તતઃ–

ॐ નમઃ સર્વનક્ષત્રેભ્યઃ સર્વનક્ષત્રાણિ સર્વનક્ષત્રેશા ઇહ શાન્તિકપૂજામહોત્સવે આગચ્છન્તુ આગચ્છન્તુ ઇહં

આચમનીય ગૃહ્ણન્તુ (૨) સન્નિહિતા ભવન્તુ સ્વાહા જલ ગૃહ્ણન્તુ (૨) સન્નિહિતા ભવન્તુ (૨) સ્વાહા જલ ગૃ૦ ગન્ધ૦ અક્ષતાન્૦ ફલાનિ૦ મુદ્રા૦ પુષ્પ૦ ધૂપ૦ દીપ૦ નૈવેદ્ય૦ સર્વોપચારાન્૦ શાન્તિ કુર્વન્તુ (૨) તુષ્ટિ૦ પુષ્ટિ૦ ઋદ્ધિ૦ વૃદ્ધિ૦ સર્વસમીહિત. દદતુ દદતુ સ્વાહા ઇત્યનેન મન્ત્રેણ પરિપિંડિતપૂજા ઉપરિઅષ્ટાવિંશતિહસ્તવસ્ત્રા ચ્છાદનમ્ ઇતિ ચતુર્થપીઠે નક્ષત્રપૂજા આચારદિનકર પૃ૦ ૨૨૧ ત ૨૨૩

## ॥ અથ પંચમપીઠે નવગ્રહપૂજનમ્ ॥

ઘંટાકર્ણપ્રતિષ્ઠાવિધૌ પૃષ્ઠ ૪૩ ત પૃષ્ઠ ૪૭ પર્યંતે લિખિત નવગ્રહપૂજન તદનુસારેણ પૂર્ણપૂજા વિધાય તત નવહસ્તવસ્ત્રેણાચ્છાદન પીઠે ઇતિ પંચમપીઠપૂજનમ્

## ॥ અથ ષષ્ઠ ષોડશવિદ્યાદેવીપૂજનમ્ ॥

પ્રથમ પુષ્પાંજલિં કરે ગૃહીત્વા-

યાસા મન્ત્રપદૈર્વિશિષ્ટમહિમ-પ્રોદ્ભૂતભૂત્યુત્કરૈ, ષટ્કર્માણિ કુલાધ્વસશ્રિતધિય ક્ષેમાત ક્ષણાત્ કુર્વતે,

તા વિદ્યાધરવૃન્દવન્દિતપદા, વિદ્યાવલીસાધને, વિદ્યાદેવ્ય ઉરુપ્રભાવવિભવ, યચ્છન્તુ ભક્તિસ્પૃશામ્ ॥ ૧ ॥

ઇતિ પુષ્પાંજલિક્ષેપ રોહિણી પ્રતિ-

શંખાક્ષમાલાશરચાપશાલિ-ચતુષ્કરા કુન્દતુષારગૌરા, ગોગામિની ગીતવરપ્રભાવા, શ્રીરોહિણી સિદ્ધિમિમા-દદાતુ ॥ ૧ ॥

ॐ ह्रीं નમઃ શ્રી-રોહિણ્યૈ વિદ્યાદેવ્યૈ, ભગવતિ શ્રી રોહિણિ ઇહ શાન્તિકપૂજા-મહોત્સવે આગચ્છ આગચ્છ ઇદમર્ઘ્યં, પાદ્યં, બલિં, ચરું, ગૃહાણ (૨) સન્નિહિતા ભવ (૨) સ્વાહા. જલં ગૃહાણ (૨) ગન્ધં० પુષ્પં० અક્ષતાન્० ફલાનિ० મુદ્રાં० ધૂપં० દીપં० નૈવેદ્યં० સર્વોપચારાન્ ગૃહાણ (૨) શાન્તિં કુરુ (૨) તુષ્ટિં० પુષ્ટિં० ઋદ્ધિં० વૃદ્ધિં० સર્વસમીહિતાનિ કુરુ (૨) સ્વાહા. ॥ ૧॥ પ્રજ્ઞપ્તિ પ્રતિ–

શક્તિ-સરોરુહ-હસ્તા, મયૂરકૃતયાનલીલયા કલિતા; પ્રજ્ઞપ્તિર્વિજ્ઞપ્તિં, શૃણોતુ નઃ કમલપત્રાભા ॥ ૨ ॥

ॐ, હં, સં, ક્લીં નમઃ શ્રી પ્રજ્ઞપ્ત્યૈ વિદ્યાદેવ્યૈ ભગવતિ શ્રી પ્રજ્ઞપ્તિ ઇહ० શેષં પૂર્વ० વજ્રશૃંખલાં પ્રતિ–

નિસ્ત્રિંશવજ્રફલકોત્તમકુન્તયુક્ત-હસ્તા સુતપ્તવિલસત્કલધૌતકાન્તિઃ;

ઉન્મત્તદન્તિગમના ભુવનસ્ય વિઘ્નં, વજ્રાંકુશી હરતુ વજ્રસમાનશક્તિઃ ॥ ૪ ॥

ॐ લં, લં, લં, નમઃ શ્રી વજ્રાંકુશાયૈ વિદ્યાદેવ્યૈ ભગવતિ શ્રી વજ્રાંકુશે ઇહ० શેષં પૂર્વ० ॥ ૪ ॥ અપ્રતિ ચક્રાં પ્રતિ–

ગરુત્મત્પૃષ્ઠ આસીના, કાર્ત્તસ્વરસમચ્છવિઃ; ભૂયાદપ્રતિચક્રા નઃ, સિદ્ધયે ચક્રધારિણી ॥ ૫ ॥

ॐ નમઃ શ્રી અપ્રતિચક્રાય, વિદ્યાદેવ્યૈ. ભગવતિ અપ્રતિચક્રે ઇહ० શેષં પૂર્વ० ॥ ૫ ॥ પુરુષદત્તાં પ્રતિ–

ખડ્ગસ્ફરાંકિતકરદ્વયશાસમાના, મેઘાભ-સૈરિભપટુસ્થિતિભાસમાના;

જાત્યાર્જુનપ્રભતનુ પુરુષાગ્રદત્તા, ભદ્રં પ્રયચ્છતુ સતા પુરુષાગ્રદત્તા ॥ ६ ॥

ૐ હ સ, નમ શ્રી પુરુષદત્તાયે વિદ્યાદેવ્યૈ ભગવતિ શ્રી પુરુષદત્તે ઇહ૦ શેષ પૂર્વ૦ કાલીં પ્રતિ–

શરદમ્બુધરપ્રમુક્તચ ચદ્-ગગનતલાભતનુદ્યુતિર્દધાત્યા, વિકચકમલવાહના ગદાભૃત, કુશલમલ કુરુતાત્ સદૈવકાલી

ૐ હ્રીં નમ કાલિકાયે વિદ્યાદેવ્યૈ, ભગવતિ શ્રી કાલિકે ઇહ૦ શેષ પૂર્વ૦ ॥ ७ ॥ મહાકાલીં પ્રતિ–

નરવાહના શશધરોપલોજ્જવલા, રુચિરાક્ષસૂત્રફલવિસ્ફુરત્કરા,

શુભઘટિકા–પવિ–વરેણ્ય–ધારિણી, ભુવિ કાલિકા શુભકરા મહાપરા ॥ ८ ॥

ૐ હૂં ઘે નમો મહાકાલ્યે વિદ્યાદેવ્યે ભગવતિ શ્રી મહાકાલિકે ઇહ૦ શેષ પૂર્વવત્ ॥ ८ ॥ ગૌરીં પ્રતિ–

ગોધાસનસમાસીના, કુન્દકર્પૂરનિર્મલા, સહસ્રપત્રસંયુક્ત,–પાણિર્ગૌરી શ્રિયેડસ્તુ ન ॥ ९ ॥

ૐ એ નમ શ્રી ગૌર્યૈ વિદ્યાદેવ્યૈ ભગવતિ શ્રી ગૌરિ ઇહ૦ શેષ પૂર્વ૦ ગાન્ધારી પ્રતિ–

શતપત્રસ્થિતચરણા, મુસલ વજ્ર ચ હસ્તયોર્દધતી, કમનીયાજનકાન્તિ–ર્ગાન્ધારી મા શુભા દધાત્ ॥ १० ॥

ૐ, ગ, ગા, નમ શ્રી ગાન્ધાર્યૈ વિદ્યાદેવ્યૈ ભગવતિ શ્રી ગાન્ધારિ ઇહ૦ શેષ પૂર્વ૦ ॥ १० ॥ મહાજ્વાલા પ્રતિ—

માર્જારવાહના નિત્યં, જ્વાલોદ્‌ભાસિકરદ્વયા; શશાંકધવલા જ્વાલા-દેવી ભદ્રં દદાતુ નઃ ॥ ૧૧ ॥

ૐ ક્લીં નમઃ શ્રી મહાજ્વાલાય વિદ્યાદેવ્ય ભગવતિ મહાજ્વાલે ઈહ૦ શેષં પૂર્વં૦ ॥ ૧૧ ॥ માનવીં પ્રતિ-

નીલાંગી નીલસરોજવાહના, વૃક્ષભાસમાનકરા; માનવગણસ્ય સર્વસ્ય, મંગલં માનવી દદ્યાત્ ॥ ૧૨ ॥

ૐ વ, ચ નમઃ શ્રી માનવ્યૈ વિદ્યાદેવ્યૈ ભગવતિ શ્રી માનવિ ઈહ૦ શેષં પૂર્વં૦ ॥ ૧૨ ॥ વૈરોટ્યાં પ્રતિ-

ખડ્‌ગસ્ફુરત્સ્ફુરિતવીર્યવદૂર્ધ્વહસ્તા, સદંદશુકવરદાપરહસ્તયુગ્મા;

સિંહાસનાબ્જમુદતારતુષારગૌરા, વૈરોટ્યયાપ્યભિધયાસ્તુ શિવાય દેવી ॥ ૧૩ ॥

ૐ જં જં નમઃ શ્રી વૈરોટ્યાયૈ વિદ્યાદેવ્યૈ ભગવતિ શ્રી વૈરોટ્યે ઈહ૦ શેષં પૂર્વં૦ ॥ ૧૩ ॥ અચ્છુપ્તાં પ્રતિ-

સવ્યપાણિધૃતકાર્મુકસ્ફરાન્યસ્ફુરદ્વિશિખખડ્‌ગધારિણી; વિદ્યુદાભતનુરશ્વવાહનાચ્છુપ્તિકા ભગવતી દદાતુ શમ્ ॥ ૧૪ ॥

ૐ, અં, એં, નમઃ શ્રી અચ્છુપ્તાયૈ વિદ્યાદેવ્યૈ ભગવતિ શ્રી અચ્છુપ્તે ઈહ૦ શેષં પૂર્વં૦ ॥ ૧૪ ॥ માનસીં પ્રતિ—

હંસાસનસમાસીના, વરદેન્દ્રાયુધાન્વિતા, માનસી માનસીં પીડાં, હન્તુ જામ્બુનદચ્છવિઃ ॥ ૧૫ ॥

ૐ હ્રીં અર્હં નમઃ શ્રી માનસ્યૈ વિદ્યાદેવ્યૈ ભગવતિ શ્રી માનસિ ઈહ૦ શેષં પૂર્વં૦ ॥ ૧૫ ॥ મહામાનસીં પ્રતિ—

કરખડ્ગરત્નવરદાઢયપાણિ— ભૃચ્છશિનિભા મકરગમના, સઘસ્ય રક્ષણકરી જયતિ મહામાનસી દેવી ॥ ૧૯ ॥

ૐ હ, હૈ, હૈ, સ નમ શ્રી મહામાનસ્યૈ વિદ્યાદેવ્યૈ ભગવતિ મહામાનસી ઇહ૦ શેષ પૂર્વ૦ ॥ ૧૬ ॥ ઇતિ પ્રત્યેકપૂજા ૐ હ્રીં નમ ષોડશવિદ્યાદેવીભ્ય સાયુધાભ્ય સવાહનાભ્ય સપરિકરાભ્ય વિઘ્નહરિભ્ય શિવકરીભ્ય ભગવત્ય વિદ્યાદેવ્ય ઇહ૦ શેષ પૂર્વ૦ ઇતિ ષોડશવિદ્યાદેવીના પરિપિંડિતપૂજા એવ પૂજા વિધાય ષોડશહસ્તવસ્ત્રેણ પીઠસ્યાચ્છાદનમ્ ઇતિ ષષ્ઠપીઠે ષોડશવિદ્યાદેવીપૂજનમ્ આ૦ દિ૦ પૃ૦ ૧૬૨–૧૬૩

## ॥ અથ સપ્તમપીઠે ગણપત્યાદિપૂજનમ્ ॥

ઘ ટાકર્ણપ્રતિષ્ઠાવિધૌ પૃ૦ ૫૨ ત ૫૪ પર્યં તદર્શિતગણપત્યાદિપૂજન વિધાય અન્તે અષ્ટહસ્તવસ્ત્રાચ્છાદન પીઠે ઇતિ સપ્તમપીઠમ્ ॥

એવ સર્વેષા પીઠાના પૂજા વિધાય ત્રિકોણકુ ડે હોમ, તત્ર પરમેષ્ઠિસન્તર્પણે ખ ડ-ઘૃત-પાયસૈ શ્રીખ ડ-શ્રીપર્ણી-સમિદ્ભિર્હોમ ॥ ૧ ॥ દિક્પાલસન્તર્પણે-ઘૃત-મધુ-ફલૈ પ્લક્ષાશ્વત્થસમિદ્ભિર્હોમ ॥ ૨ ॥ રાશિસન્તર્પણે-ક્ષીરઘૃતાભ્યા ન્યગ્રોધ-નિમ્બ-સમિદ્ભિ-ર્હોમ ॥ ૩ ॥ નક્ષત્રસન્તર્પણે-ઘૃત-મધુ-ગુગ્ગુલ-ફલૈ પ્લક્ષાશ્વત્થ સમિદ્ભિર્હોમ ॥ ૪ ॥ ગ્રહસન્તર્પણે- ક્ષીર-મધુ-ઘૃતે ફલસહિતે કપિત્થાશ્વત્થસમિદ્ભિર્હોમ ॥ ૫ ॥ વિદ્યાદેવી-સન્તર્પણે-ઘૃત-પાયસ-ખ ડફલૈરશ્વત્થસમિદ્ભિર્હોમ ॥ ૬ ॥ ગણપતિસન્તર્પણે-મોદકૈ ઉદુમ્બુર-સમિદ્ભિર્હોમ

॥ ७ ॥ **કાર્તિકેયસન્તર્પણે**-મધુકપુષ્પૈઃ સઘતઃ પ્લક્ષ-સમિદ્ભિર્હોમઃ ॥ ૮ ॥ **ક્ષેત્રપાલસન્તર્પણે**-તિલપિંડૈર્ધત્તૂરસમિદ્ભિર્હોમઃ ॥ ૧૦ ॥ **પુરદૈવતસન્તર્પણે**-ઘૃત-ગુડ-ક્ષૌદ્રૈ-વંટસમિદ્ભિર્હોમઃ. **ચતુર્ણિકાયદેવસન્તર્પણે**-નાનાફલૈઃ પાયસૈઃ આમ્રસમિદ્ભિર્હોમઃ.

સર્વત્ર હોમે મૂલમંત્રાઃ સમિધઃ સર્વત્ર પ્રાદેશપ્રમાણાઃ એવં સર્વેષાં પૂજનં, હોમં ચ વિધાય બૃહત્સ્નાત્રવિધિર્વિધેયઃ. આચાર દિ૦ પૃ૦ ૨૨૦ તઃ ૨૨૩.

## ॥ અથ બૃહત્સ્નાત્રવિધિઃ ॥

ઘંટાકર્ણપ્રતિષ્ઠાવિધિમધ્યે લિખિત-પૃષ્ઠ ૬૫ તઃ ૭૬ પર્યંત પૂર્ણોબૃહત્સ્નાત્રવિધિર્વિધેયઃ ઇતિ.

એવં વિધિના સ્નાત્રવિધિનાન્તરં સ્નાત્રોદકં સર્વં ગ્રાહ્યં સર્વતીર્થજલં ચ સંમીલ્ય બિમ્બાગ્રે સુવિલિપ્તભૂમૌ ચતુષ્કિકોપરિ ન્યસ્તસ્ય યથાસંપત્તિકૃતસ્ય, બદ્ધકંઠસ્ય, મદનફલાદિરક્ષસ્ય શાન્તિકલશસ્ય મધ્યે નિક્ષિપેત્. રક્ષાદિ બન્ધનં સર્વત્ર શાન્તિમંત્રેણ. તતઃ કલશમધ્યે સ્વર્ણરૂપ્યમુદ્રાઃ પુગફલાનિ, નાલિકેરં ચ શાન્તિમંત્રેણ ન્યસેત્-તતઃ શુદ્ધોદકૈરખંડધારયા, દ્વૌ સ્નાત્રકારૌ સ્નાત્રકલશં પૂરયતઃ. ઉપરિ છદ્માકારેણ ( છદ્દાધારેણ ) આકલશમૂલાવલમ્બિ સદશવસ્ત્રં બધ્નીયાત્. ગુરુશ્ચ કુશેન તાં જલધારાં, શાન્તિકલશે નિપતન્તીં, શાન્તિદંડકં પઠન્નભિમંત્રયતિ.

## श्री–शान्तिदंडको यथा–

नम श्रीशान्तिनाथाय, सर्वविघ्नापहारिणे,
सर्वलोकप्रकृष्टाय, सर्ववांछितदायिने ॥१॥

इह हि भरतैरावतविदेहजन्मना, तीर्थकराणां जन्मसु चतु षष्ठिसुरासुरेन्द्राश्च चलितासना, विमानघंटा-टंकारक्षुभिता प्रयुक्तावधिज्ञानेन, जिन जन्म–विज्ञान–परमतम–प्रमोद–पूरिता मनसा नमस्कृत्य जिनेश्वर सकल-सामानिकागरक्षपार्षत्रायस्त्रिंशल्लोकपालानीकप्रकीर्णकाभियोगिकसहिताः साप्सरोगणा सुमेरुशृंगमागच्छन्ति तत्र च सौधर्मेन्द्रेण विधिना करसंपुटानीतांस्तीर्थंकरान् पांडुकवलातिपांडुकवलारक्तकवलातिरक्तकवलाशिलासु, न्यस्तसिंहासनेषु, सुरेन्द्रक्रोडस्थितान् कल्पितमणिसुवर्णादिमययोजनमुखकलशोद्गतैस्तीर्थवारिभिः स्नपयन्ति. ततो गीत–नृत्य–वाद्य–महोत्सवपूर्वक शान्तिमुद्घोषयन्ति ततस्तत्कृतानुसारेण वयमपि तीर्थंकरस्नात्रकरणानन्तरं शान्तिमुद्घोषयाम सर्वे कृतावधाना सुरासुरनरोरगाः शृण्वन्तु स्वाहा.

ॐ अर्हं नमो नमो जय जय पुण्याहं पुण्याहं प्रीयन्तां, प्रीयन्तां भगवन्तोऽर्हन्तो विमलकेवलास्त्रिलोक-पूज्या–स्त्रिलोकोद्योतकरा, महातिशया, महानुभावा महातेजसो महापराक्रमा महानन्दाः.

ॐ ऋषभ–अजित–संभव–अभिनंदन,सुमति–पद्मप्रभ–सुपार्श्व–चन्द्रप्रभ—सुविधि—शीतल–श्रेयांस–वासुपूज्य–विमल–अनंत–धर्म–शांति–कुंथु–अर–मल्लि–मुनिसुव्रत–नमि–नेमि–पार्श्व–वर्धमानान्ता जिना अतीतानागतवर्तमानाः पंचदशकर्मभूमिसंभवा विहरमाणाश्च, शाश्वतप्रतिमागता भवनपतिव्यंतरज्योतिष्क–वैमानिक–भवनसंस्थिताः तिर्यग्लोक–नंदीश्वर–रुचकेषुकार–कुंडल–वैताढ्य–गजदंत–वक्षस्कार–मेरुकृतनिलया जिनाः सुपूजिताः सुस्थिताः शान्तिकरा भवन्तु स्वाहा.

ॐ देवाश्चतुर्णिकाया भवनपति–व्यंतर–ज्योतिष्क–वैमानिकास्तदिन्द्राश्च साप्सरसः सायुधाः सवाहनाः सपरिकराः प्रीताः शान्तिकरा भवन्तु स्वाहा.

ॐ रोहिणी–प्रज्ञप्ति–वज्रशृंखला–वज्रांकुशी–अप्रतिचक्रा–पुरुषदत्ता–कालि–महाकालि–गौरी-गान्धारी--सर्वास्त्रा-महाज्वाला-मानवी-वैरोट्या-अच्छुप्ता-मानसी-महामानसीरूपाः षोडशविद्यादेव्यः सुपूजिताः प्रीताः शान्तिकारिण्यो भवन्तु स्वाहा.

ॐ अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुपरमेष्ठिनः सुपूजिताः प्रीताः शान्तिकरा भवन्तु स्वाहा.

ॐ अश्विनी-भरणी-कृतिका-रोहिणी-मृगशीर-आर्द्रा-पुनर्वसु-पुष्य-आश्लेषा-मघा-पूर्वाफाल्गुनी-उत्तराफाल्गुनी-

हस्त-चित्रा स्वाति-विशाखा-अनुराधा ज्येष्ठा-मूल पूर्वाषाढा-उत्तराषाढा अभिजित् श्रवण धनिष्ठा-शतभिषक् पूर्वभद्रपदा-

उत्तराभद्रपदा-रेवती रूपाणि नक्षत्राणि सुपूजितानि प्रीतानि शान्तिकराणि भवन्तु स्वाहा.

ॐ मेष वृष-मिथुन-कर्क-सिंह-कन्या-तुला-वृश्चिक-धनु-मकर-कुंभ-मीनरूपा राशयस्सुपूजिता. सुप्रीता

शान्तिकरा भवन्तु स्वाहा

ॐ सूर्य-चन्द्रांगारक-बुध-गुरु-शुक्र-शनैश्चर-राहु-केतुरूपा ग्रहा सुपूजिता प्रीताः शान्तिकरा भवन्तु

स्वाहा.

ॐ इन्द्राग्नि यम-निर्ऋति-वरुण-वायु कुबेरेशान-नाग ब्रह्मरूपा दिक्पालाः सुपूजिता. सुप्रीताः शान्तिकरा

भवन्तु स्वाहा

ॐ गणेश-स्कन्द-क्षेत्रपाला देश-नगर-ग्रामदेवताः सुपूजिताः सुप्रीता शान्तिकरा भवन्तु स्वाहा

ॐ अन्येऽपि क्षेत्रदेवा जलदेवा भूमिदेवाः सुपूजिताः सुप्रीताः भवन्तु स्वाहा शान्ति कुर्वन्तु स्वाहा.

ॐ अन्याश्च पीठोपपीठक्षेत्रोपक्षेत्रवासिन्यो देव्य सपरिकरा सवडुका सुपूजिता सुप्रीता भवन्तु (स्वाहा)

ॐ शान्ति कुर्वन्तु स्वाहा.

ॐ सर्वेऽपि तपोधन-तपोधनी-श्रावक-श्राविकाभवाश्चतुर्णिकायदेवाः सुपूजिताः सुप्रीता भवन्तु, शान्ति कुर्वन्तु स्वाहा.

ॐ अत्रैव देश-नगर-ग्राम-गृहेषु दोष-रोग-वैर-दौर्मनस्य-दारिद्र्य-मरक-वियोग-दुःख-कलहोपशमेन शान्तिर्भवतु.

दुर्मनोभूत-प्रेत-पिशाच-यक्ष-राक्षस-वैताल-झोटिक-शाकिनी-डाकिनी-तस्करातताथिनां प्रणाशेन शान्तिर्भवतु.

भूकम्प,-परिवेष-विद्युत्पातोल्कापात-क्षेत्र-देश-निर्घात-सर्वोत्पात-दोषशमनेन शान्तिर्भवतु.

अकाल-फल-प्रसूति—वैकृत्य—पशुपक्षिवैकृत्याकालदुश्चेष्टा—प्रमुखोपप्लवोपशमनेन शान्तिर्भवतु.

ग्रहगणपीडित-राशिनक्षत्रपीडोपशमनेन शान्तिर्भवतु.

जांघिक-नैमित्तिकाकस्मिक—दुःशकुन—दुःस्वप्नोपशमनेन शान्तिर्भवतु.

कृतक्रियमाण—पापक्षयेण शान्तिर्भवतु. दुर्जन—दुष्ट—दुर्भाषक—दुश्चिन्तक—दुराराध्य—शत्रूणां दूरापगमनेन शान्तिर्भवतु.

उन्मृष्ट-रिष्ट-दुष्ट-ग्रह-गति,-दुःस्वप्न-दुर्निमित्तादि; संपादित-हित-संपन्नामग्रहणं, जयति शान्तेः ॥ १ ॥

या शान्तिः शान्तिजिने, गर्भगतेऽथाजनिष्ट वा जाते; सा शान्तिरत्र भूयात्, सर्वसुखोत्पादनाहेतुः ॥ २ ॥

अत्र च गृहे सर्वसंपदागमनेन, सर्वसंतानवृद्ध्या, सर्वसमीहितवृद्ध्या, सर्वोपद्रवनाशेन मांगल्योत्सव–

प्रमोद-कौतुक-विनोद-दानोद्भवेन शान्तिर्भवतु

भ्रातृ,-पत्नी,-मित्र,-सवधिजन,-नित्य—प्रमोदेन शान्तिर्भवतु

आचार्योपाध्याय,-तपोधन-तपोधना-श्रावक-श्राविकारूपसंघस्य शान्तिर्भवतु

सेवक,-भृत्य,-दास,-द्विपद,-चतुष्पद,-परिकरस्य शान्तिर्भवतु.

अक्षीणकोशकोष्ठागारजलवाहनानां नृपाणां शान्तिर्भवतु

श्रीजनपदस्य शान्तिर्भवतु श्रीजनपदमुख्याणां शान्तिर्भवतु श्रीसर्वाश्रमाणां शान्तिर्भवतु. पुरमुख्याणां शान्तिर्भवतु राजसन्निवेशानां शांतिर्भवतु धन,-धान्य-वस्त्र-हिरण्यानां शान्तिर्भवतु ग्राम्याणां शान्तिर्भवतु क्षेत्रिकाणां शान्तिर्भवतु क्षेत्राणां शान्तिर्भवतु

सुवृष्टा सन्तु जलदाः सुवाताः सन्तु वायवः; सुनिष्पन्नास्तु पृथिवी, सुस्थितोऽस्तु जनोऽखिलः ॥१॥

ओं तुष्टि,-पुष्टि,-ऋद्धि,-वृद्धि,-सर्वसमीहितवृद्धिर्भूयात्.

शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणा । दोषाः प्रयान्तु नाशं, सर्वत्र सुखीभवन्तु लोका. ॥१॥

सर्वेऽपि सन्तु सुखिन, सर्वे सन्तु निरामया । सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग् भवेत् ॥२॥

जगत्यां सन्ति ये जीवाः स्वस्वकर्मानुसारिणः । ते सर्वे वांछितं स्वं स्वं, प्राप्नुवन्तु सुख शिवम् ॥३॥

इति शान्तिदंडकं जलधारामिमन्त्रसहितं त्रिः पठेत् ततः शान्तिकलशजलेन शान्तिककारयितारं सपरिवारमभिषिंचेत् सर्वत्र गृहं, ग्रामं च दिक्पालादि सर्व-दैवत-विसर्जनं पूर्ववत्. इति शान्तिकम्.

## अथ शान्तिक-फलम्

सवत्र गृहिसंस्कारे, सूति-मृत्यु-विवर्जिते, प्रतिष्ठासु च सर्वासु, षण्मास्यां वत्सरेऽथवा ॥ १ ॥
आरब्धे च महाकार्ये, जातेऽप्युत्पातदर्शने, रोग-दोषे महाभीतौ, संकटोपगमेऽपि च ॥ २ ॥
गतभूम्यादिलाभे च, महापापस्य संभवे । काराप्यं शान्तिकं नूनं धीमद्भिर्गृहमेधिभिः ॥ ३ ॥
दुरितानि क्षयं यान्ति, रोगदोषौ च शाम्यतः । दुष्टदेवासुरा मर्त्याः सपत्ना स्युः पराङ्मुखाः ॥ ४ ॥
सौमनस्यं शुभं श्रयः, तुष्टिः पुष्टिर्विवर्धते । समीहितस्य सिद्धिःस्या-च्छान्तिकस्य विधानतः ॥ ५ ॥

इति सामान्यशान्तिकफलं, शान्तिकान्ते साधुभ्यो विपुलवस्त्रपात्रभोजनोपकरण दानं दद्यात्.
अत्र गृहे कथिते गृहाधिपस्य नामोच्चारं कुर्यात्.

इति शान्तिककार्ये विशेष-पूजा-विधानम् (आचार दिनकर पृ० २२० तः २२५)

( इति समाप्तम् )

પ્રકૃતિ ' ક્ષેત્ર ' ૨૪ આંગળ, તેના આઠ ભાગ કરવા તેમાંથી ' ૫ ' ભાગ એટલે ' ૧૫ ' આંગળ જેટલું જમીનમાં ખોદવું, ઉંચાઈમાં ૯ આંગળની ૩ મેખલા કરવી, એક ભાગ એટલે એક આંગળ પુષ્પકંઠ કરવો. પહેલી મેખલા–ઉપરના કુંડના છઠ્ઠા ભાગ–એટલે ૪ આંગળ ઉંચી અને ૪ આંગળ પહોળી કરવી. તે પછી મધ્યમાં બીજી મેખલા–આઠમા ભાગ એટલે ૩ આંગળ ઉંચી, ૩ આંગળ પહોળી કરવી, ત્રીજી મેખલા–નીચે બારમા ભાગ જેટલી એટલે ૨ આગળ ઉંચી અને ૨ આંગળ પહોળી બનાવવી. ॥ ઇતિ **ચોરસ કુંડ બનાવવાની રીત.**

યોની વ્યાસની અર્ધી. વ્યાસ ૨૪ આંગળ તેની અર્ધી–૧૨ આંગળ લાંબી કરવી, ૮ આંગળ પહોળી, ૧૨ આંગળ ઉંચી કરવી અને નીચેથી ભારી, ઉપર એક આંગળ સંકલિત અને જમીનના મૂળ સહીત છિદ્રની નાળ ૧૨ આંગળ ઉંચી અને આગળના ભાગમાં ૧ આંગળ નમતી, અંદર એક આંગળ કંઠની બહાર આગળ નીકળતી અને વચમાં એક આંગળ કાચબાની પીઠ આવી રીતે બનાવવી, માટીના ૨ ગોળા બંને બાજુ પુષ્ટ ઉપર રાખવા, ૧ આંગળ પહોળી એક આંગળ ઉંચી તેની પરિધિ ચારે બાજુ રહે, આ પીપળાના પાનની આકૃતિ યોની હોય છે. ॥ ઇતિ **યોની બનાવવાની રીત.**

ચોરસ ( ૨૪ આંગળ ) ક્ષેત્રફળના ૩ ભાગ કરવા. (૮ આંગળ) એક ભાગ આગળ વધારવો. ( ૩૨ આંગળ ) ચોરસ ક્ષેત્રફળના ૪ ભાગ કરવા. તેમાનો એક એક ભાગ ( ૬–૬ આંગળ ) પડખે વધારવો અને ત્રિકોણુ કરવું, મેખલા નાભી અને યોની ચોરસ કુંડ પ્રમાણે કરવી. ॥ ઇતિ **ત્રિકોણુ કુંડ.**

(૧) પૂર્વ—ઓં નમ ઈન્દ્રાય સાયુધાય સવાહનાય સપરિજનાય, ઈહ ઘંટાકર્ણમૂર્તિપ્રતિષ્ઠામહોત્સવે

આગચ્છ આગચ્છ, બલિ-પૂજા ગૃહાણ ગૃહાણ સ્વાહા (એ પાઠ કહીને બલિ ઉછાળે જલ, ચંદન, પુષ્પ, ધુપ, દીપ આદિ ચઢાવે)

(૨) અગ્નિકોણે—ઓ નમોઽગ્નયે, સાયુધાય, સવાહનાય, સપરિજનાય, ઇહ૦ પૂજા બલિ ગૃહાણ ગૃહાણ સ્વાહા

(૩) દક્ષિણકોણે—ઓ નમો યમાય, સાયુધાય સવાહનાય, સપરિજનાય ઇહ૦ પૂજા બલિ ગૃહાણ ગૃહાણ સ્વાહા

(૪) નૈઋત્યકોણે-ઓ નમો નૈઋતાય, સાયુધાય, સવાહનાય સપરિજનાય ઇહ ઘંટાકર્ણમૂર્તિપ્રતિષ્ઠામહોત્સવે આગચ્છ આગચ્છ બલિ પૂજા૦

(૫) પશ્ચિમદિશાએ—ઓ નમો વરૂણાય, સાયુધાય, સવાહનાય સપરિજનાય ઇહ ઘંટાકર્ણમૂર્તિપ્રતિષ્ઠા-મહોત્સવે આગચ્છ, આગચ્છ, બલિ પૂજા૦

(૬) વાયવ્યે—ૐ નમો વાયવે સાયુધાય, સવાહનાય સપરિજનાય ઇહ ઘંટાકર્ણમૂર્તિપ્રતિષ્ઠામહોત્સવે આગચ્છ, આગચ્છ બલિ પૂજા ગૃહાણ, ગૃહાણ સ્વાહા

(૭) ઉત્તરે—ઓ નમો ધનદાય, સાયુધાય, સવાહનાય સપરિજનાય ઇહ૦ પૂજા, બલિ ગૃહાણ, ગૃહાણ સ્વાહા

(૮) ઇશાનકોણે—ઓ નમો ઇશાનાય, સાયુધાય, સવાહનાય સપરિજનાય ઇહ૦ ઘંટાકર્ણમૂર્તિપ્રતિષ્ઠા-મહોત્સવે આગચ્છ, આગચ્છ બલિ પૂજા ગૃહાણ, ગૃહાણ સ્વાહા

(૯) ઉર્ધ્વલોકે—ઓં નમો બ્રહ્મણે સાયુધાય, સવાહનાય, સપરિજનાય, ઇહ ઘંટાકર્ણપ્રતિષ્ઠામહોત્સવે આગચ્છ, આગચ્છ બલિં પૂજાં ગૃહાણ, ગૃહાણ સ્વાહા.

(૧૦) અધોલોકે—ઓં નમો નાગાય, સાયુધાય, સવાહનાય, સપરિજનાય, ઇહ ઘંટાકર્ણપ્રતિષ્ઠામહોત્સવે આગચ્છ, આગચ્છ બલિં પૂજાં ગૃહાણ, ગૃહાણ સ્વાહા. ॥ ઇતિ ॥ **'દશ દિક્પાલ બલિ પ્રદાન' મંત્ર.**

પૂર્વદિશા—ઓં નમ ઇન્દ્રાય, સાયુધાય, સવાહનાય, સપરિજનાય, પૂજાં, બલિં ગૃહાણ, ગૃહાણ સ્વસ્થાનં ગચ્છ, ગચ્છ સ્વાહા. અગ્નિકોણે. ઓં નમોગ્નયે૦ દક્ષિણે. ઓં નમો યમાય૦ નૈરૃત્યે. ઓં નમો નૈરૃતાય૦ પશ્ચિમે ઓં નમો વરૂણાય૦ વાયવ્યે. ઓં નમો વાયવે૦ ઉત્તરે. ઓં નમો ધનદાય૦ ઇશાને. ઓં નમો ઇશાનાય૦ ઉર્ધ્વલોકે ઓં નમો બ્રહ્મણે૦ અધોલોકે. ઓ નમો નાગાય૦ ॥ ઇતિ **દશદિક્પાલ વિસર્જન.**

પ્રથમ જુવારની ધાણી શેર પાંચની કરવી. પછી માણેક લાડુ શેર સવા બેનો કરવો. તેમાં રૂપા નાણું અને વિંધ્યા વગરનું મોતી નાખવું. પછી તે લાડવો ધાણી ઉપર મુકવો. પછી પતાસા, ધૂપ, કુસુમાંજલિ પાસે રાખીને વિસર્જન કરવું. તે આ પ્રમાણે—(૧) કુંભ વિસર્જન—કુંભની પાસે જઇને ઓં વિસર વિસર સ્વસ્થાનં ગચ્છ ગચ્છ સ્વાહા. એમ બોલવું. (૨) અખંડ દીપ વિસર્જન—અખંડ દીપની પાસે જઇને ઓં વિસર વિસર સ્વસ્થાનં ગચ્છ ગચ્છ સ્વાહા. એમ બોલવું (૩) પીઠ વિસર્જન—પીઠ પાસે જઇને ઓં વિસર વિસર સ્વસ્થાનં ગચ્છ ગચ્છ સ્વાહા. એમ બોલવું. પછી કુસુમાંજલિ ઉછાલવી. ॥ ઇતિ **વિસર્જનવિધિ.**

## અથ ઘંટાકર્ણપ્રતિષ્ઠા તથા શાન્તિકપૂજનની હવન સામગ્રી

૧ પંચ પરમેષ્ઠિ પૂજન હોમમા—ખાંડ, ઘી, દુધપાક, ચંદન અને સેવનના તથા ખીજડાના છોડીઆ
૨ દશ દિક્પાલ પૂજન હોમમા—ઘી, ગોળ, ગુગળ, દુધપાક, શેરડીના કકડા, પીપળો અને વડના છોડીઆ
૩ બાર રાશિ પૂજન હોમમા—દુધ, ઘી, વડ અને બીલાના છોડીઆ
૪ નક્ષત્ર પૂજન હોમમા—ઘી, મધ, ગુગુલફળ, પીપળા અને વડના છોડીઆ
૫ નવગ્રહ પૂજન હોમમા—ઘી, ગોળ, દુધ, શેરડીના કકડા, કોહું, પીપળાના છોડીઆ
૬ સોળ વિદ્યાદેવી પૂજન હોમમા—ઘી, ખાંડ, દુધપાક, શેરડીના કકડા, પીપળાના છોડીઆ
૭ ગણપતિ પૂજન હોમમા—લાડવા ચૂરમાના, ઉંબરાના છોડીઆ
૮ કાર્તિકેય પૂજન હોમમાં—ઘી, દુધપાક, મહુડાના ફૂલ, પીપળાના છોડીઆ
૯ ક્ષેત્રપાલ પૂજન હોમમા—તલના લાડવા, ધતુરાના છોડીઆ
૧૦ પુરદેવતા પૂજન હોમમા—ઘી, ગોળ, શેરડીના કકડા, વડના છોડીઆ
૧૧ ચાર નિકાયદેવ પૂજન હોમમા—દુધપાક, શેરડીના કકડા, જુદી જુદી જાતના ફૂલો

आज्ञाहीनं क्रियाहीनं मंत्रहीनं च यत्कृतम् ।
तत्सर्वं कृपया देवाः क्षमन्तु परमेश्वराः ॥१॥

आह्वाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि त्वमेव शरणं मम ॥२॥ (पृ० २७)

कीर्तिं श्रियो राज्यपदं सुरत्वं, न प्रार्थये किंचन देवदेव ।
मत्प्रार्थनीयं भगवन् प्रदेयं, त्वद्दासतां मां नय सर्वदापि ॥१॥

## इति घण्टाकर्ण-प्रतिष्ठा-विधिः समाप्तः



श्रीखरतरगच्छालंकार १००८ आचार्यशिरोमणि
परम पूज्य श्रीजिनकृपाचन्द्रसूरीश्वरजी महाराज के सुशिष्य
प्राचीन साहित्योद्धारक उपाध्याय पदविभूषित

## १०८ स्व. सुखसागरजी महाराज साहेब!

आपके करकमलों द्वारा पालीताणा में निवास दरम्यान जैन-संस्कृति के ज्योतिस्तंभ १००८ दादा साहेब श्रीजिनदत्तसूरीश्वरजी की प्रेरक प्रतिमाएँ (गुरुमन्दिरों) दादावाडियों में विराजमान हुईं, तथा शासनरक्षक वीराधिवीर श्रीघण्टाकर्ण महावीर की ओजस्वी प्रतिमा शास्त्रोक्त विधि से स्थापित की गई, जिनशासन की ध्वनि के प्रतीक मन्त्राक्षरयुक्त महाघण्ट भी प्रस्थापित हुआ।

जिनकथित उपधान आदि अनेक धार्मिक क्रियानुष्ठान सम्पन्न हुए, ऐसे संस्कृति और साहित्य के मननशील मनीषी और आध्यात्मिक चेतना के गतिप्रदायक महामुनि की सेवा में सदा सादर वन्दन हो।